## હર્ષનિધિ

પીડા રુપી અગ્નિને ઉપશાંત કરવામાં મેઘ સમાન, સંદેહ રહિત, સૂર્યસમ દીપ્તિમાન, ક્રિયાને કરનારા, સુંદર આકૃતિવાળા, મજબુત (મુદ્‌ગર જેવા) દેહ વાળા, ગજલાંછનવાળા હે અજીતનાથ ભગવાન ! તમે સુખને કરો (આપો).

तथैव जिनेशितुः दृष्टिपातादेव दुरिततमसो दूरीभवनम्, करोकः = सूर्यकान्तिः, तस्य सम्बोधने प्रयोगः ।

पुनः कीदृश ? कारिकारक ! ☛ कारिः = क्रिया ➔ कारिः शिल्पी क्रियापि च ← [२-३९१] इत्यनेकार्थसङ्ग्रहः, तां करोति इति "कृ"धातोः "णकं"प्रत्ययः कारिकारकः = क्रियाकारकः सूक्ष्मक्रियानिवृत्तिक्रियाकारक इत्यर्थः, तस्य सम्बोधने ।

पुनः कीदृश ? आकराकार ! ☛ आकरः = श्रेष्ठः ➔ आकरो निवहोत्पत्ति-स्थानश्रेष्ठेषु कथ्यते ← [१५८] इति विश्वः, आकारः = आकृतिः ➔ आकार इङ्गिताकृत्योः ← [३-५१५] इत्यनेकार्थसङ्ग्रहः, आकर आकारो यस्य स आकराकारः = सुन्दराकृतिः त्रिषष्टिशलाकापुरुषाणां निश्चयतः समचतुरस्रसंस्थानस्य विद्यमानत्वात् तत्सम्बोधने ।

पुनः कीदृश ? कर्करकर्क ! ☛ कर्करः = दृढः ➔ कर्करो भाण्डभेदेऽस्थ्नि पाषाणे दर्पणेऽपि ना दृढे ← [११३९/११४०] इति वाङ्मयार्णवः, कर्कः = तनुः, क्रियते क्रिया अनेन स कर्कः = काया, "कृ"धातोः "क"प्रत्ययः, कर्करः कर्कः यस्य स कर्करकर्कः, अथवा कर्करं = मुद्गरम् लोहशस्त्रमित्यर्थः ➔ कर्करं मुद्गरं विदुः ← [१६८] इति हारावली, तद्वत् कर्कः = काया यस्य स कर्करकर्कः = दृढशरीरी उग्रोपसर्गसहने समर्थः, स्यादेतेषामवश्यमेव वज्रऋषभनाराच एव संहननमिति, तस्य सम्बोधने प्रयोगः ।

इति श्रीअजितनाथजिनस्तुतिः ।

★ ★ ★

[ स - न ]

## श्रीसम्भवनाथजिनस्तुतिः

सूनैः सनसि नानाऽसं
सेनासूनुं सनान्ननु ?।
सेनासूसनिना सानो !
नूनं सा-सानसी सना ॥ ५ ॥

सूनैः सनसि इति ।

सानो ! ☙ सानुः = विद्वान् ➔ सानुरस्त्री वने प्रस्थे वात्यामार्गाग्रकोविदे ← [२०-२२] इति मेदिनी, तत्सम्बोधने हे सानो ! त्वं नाना = अनेकानि ➔ नाना विनोभयानेकार्थेषु ← [७-३९] इत्यनेकार्थसङ्ग्रहः, सूनानि = पुष्पाणि ➔ पुष्पं सूनं सुमनसः ← [११२५] इति हैमः, तैः अनेकैः सूनैः = पुष्पैः सेनासूनुं सेनानाम्न्या राज्ञ्याः सूनुः = तनयः ➔ उद्वहोऽङ्गात्मजः सूनुस्तनयः ← [५८२] इति हैमः, सेनासूनुस्तम् = श्रीसम्भवजिनवरम्, सनाद् = सदा ➔ शश्वत् सनात् सना ← [८-८-६] इति वैजयन्तीकोषः, सनसि = भजसि ➔ षन भक्तौ ← [३३०] ।

हे विद्वन् ! त्वं निष्कोपं श्रीसम्भवस्वामिनमनेकैः प्रसूनैरर्चसि न वा इति प्रश्नः, ननु प्रश्ने ➔ ननु प्रश्ने ← [२-३१] इति विश्वः ।

किंलक्षणं सेनासूनुम् ? असम् ☙ सः = कोपः ➔ सः कोपे वरुणे सः स्याद् ← [३५] इत्येकाक्षरीकोषः, नास्ति सः = कोपो यस्य स असः = अकोपः निष्कषायत्वात् तम्, अथवा सः = कामः ➔ सः परोक्षे च कामे च ← [४३] इत्येकाक्षरनाममाला वररुचिरचिता, नास्ति सो यस्य स असः = निष्कामः निर्विकारित्वात् तम्, अथवा सः = निवासः गृहमित्यर्थः ➔ सः पुंसि.....: निवासे ← [१३७/१३८] इत्येकाक्षरीनाममाला कालिदासव्यासकृता, न विद्यते सो यस्य स असः = अनगारी निष्परिग्रहित्वात् तम्, अथवा सः = स्त्रीवशः ➔ सकारं भारतीबीजं

*अन्वयः* ☛ (हे) सानो [विद्वन् !] (त्वं) नाना सूनैः [अनेकैः पुष्पैः] असम् [अक्रोधं] सेनासूनुं [श्रीसम्भवजिनं] सनात् [सदा] सनसि [भजसि] ननु ? (यतः) सेनासूसनिना [श्रीसम्भवनाथजिनार्चनया] सना [सदा] नूनं [निश्चयतः] सा-सानसी [लक्ष्मी-सुवर्णे] (स्याताम्) ।

## હર્ષનિધિ

હે વિદ્વાન ! તું કોપવિનાનાં, સેનાનામની મહારાણીનાં પુત્રની (શ્રીસંભવનાથ ભગવાનની) વિવિધ પુષ્પોથી સદૈવ પૂજા કરે છે ને ? કારણ કે શ્રી સંભવનાથ સ્વામીની પૂજા કરવાથી લક્ષ્મી અને સુવર્ણ અવશ્ય થાય છે. (મળે છે.)

श्वेतं सारस्वतप्रदं प्रतिविद्वज्जनजयं वराणां योषितां वशम् ← [४७] इत्येकाक्षर - नाममालाऽज्ञातकृता, न सो यः स असः = अस्त्रीवशः आत्मैकलक्षित्वात् तम्, अथवा अम् = श्वेतम् → अकारं ब्रह्मदैवत्वं श्वेतम् ← [१] इत्येकाक्षरनाममालाऽ - ज्ञातविद्वत्कृता, सं = ध्यानम् → स ? (सं) भवेदिह साकारे प्रभञ्जने अविचले च शकटपथे ध्याने ← [४४] इत्यजिरादि-एकाक्षरीनाममाला, अं = श्वेतं सं = ध्यानं यस्य स असः = शुक्लध्यानी कर्ममालिन्यरहितत्वात् तम्, अथवा अवग्रहरहितोऽयं प्रयोगो ध्येयः, सः = ईश्वरः → स ईश्वरः ← [३५] इत्येकाक्षरीकोषः, समर्थत्वात् तम्, अथवा सः = श्रेष्ठः → सकारः कीर्तितः श्रेष्ठे ← [३५] इत्यभिधानादि - एकाक्षरीनाममाला, सर्वगुणसम्पन्नत्वात् तम् ।

सेनासूनोरर्चया किं स्यादिति प्रश्नस्योत्तरं व्याचिख्यासुराह सेनासूसनिना इति ।

सेनासूः ☞ सेना सूः = जननी यस्य स सेनासूः सेनामातृकः → सूर्वधूवच्च मातरि ← [११३] इत्येकाक्षरनाममालिका विश्वशम्भुप्रणीता, तस्य सनिः = पूजा → सनिः पुंसि पूजायाम् ← [भा.-५, पृ.-२३८] इति शब्दकल्पद्रुमः, सेनासूसनिः तेन सेनासूसनिना = श्रीसम्भवस्वाम्यचर्नया सना = सदा → सदा सनाऽनिशं शश्वद् ← [१५३१] इति हैमः, नूनं = निश्चयतः → अवश्यं नूनं च निश्चये ← [१५४०] इति हैमः ।

सा-सानसी ☞ सा = लक्ष्मीः → सा च लक्ष्मीर्बुधैः प्रोक्ता ← [३५] इत्येकाक्षरीकोषः, सानसिः = सुवर्णम् → सानसिस्तु ऋणे पुंसि सुवर्णेऽपि नखेऽपि च ← [६३९७] इति वाङ्मयार्णवः, सा च सानसिश्च इति सा-सानसी, स्यातामिति अध्याहार्यम्, आभ्यन्तरदृष्ट्या लक्ष्मीश्चात्र मुक्तित्वेन सुवर्णञ्च सद्गुणत्वेन भाव्यम् ।

इति श्रीसम्भवनाथजिनस्तुतिः ।



[ क - ल ]

## श्रीअभिनन्दनजिनस्तुतिः

कालिकः कुलिकः काको
लूकिकालूर्लुलोल लः ।
लोककलिं कलिः कालं
लालिककेकिकालिकः ॥ ६ ॥

# पुण्यवल्लभा

कालिक: कुलिक इति।

कालिक: ☛ कालिकादेवी शासनदेवीत्वेन विद्यते यस्य स कालिक: श्रीअभिनन्दनस्वामीत्यर्थ:, "अभ्रादिभ्य:" ७-२-४६ इत्यनेन मत्वर्थीय "अ"प्रत्यय:, श्रीअभिनन्दनस्वामी लोककलिं ☛ लोका: = जना विश्वत्रयं वा, बहुत्वाद् बहुवचनम् ➔ लोको विश्वे जने ← [२-१६] इत्यनेकार्थसङ्ग्रहः, कलि: = विवादो युद्धं वा ➔ कलि: कलह: ← [२५] इति लिङ्गविशेषविधि: (वररुचिकोश:), लोकानां कलि: लोककलि: = जनानां विवादो विश्वयुद्धं वा तम्, तथा कालं ☛ काल: = यमराज: ➔ कीनाश-मृत्यू समवर्ति-कालौ ← [१८४] इति हैम:, मृत्युर्वा ➔ मृति: संस्था मृत्युकालौ ← [३२३] इति हैम:, तं लुलोल = ममर्द ➔ लुल विमर्दने ← [पृ. - ४८२९] इति वाचस्पत्यम्।

कीदृश: कालिक: ? कुलिक: = कुलीन: उत्तमकुलवानित्यर्थ:, कुलं प्राशस्त्येन अस्ति यस्य स, "अतोऽनेकस्वरात्" ७-२-६ इत्यनेन "इक"प्रत्यय: ➔ कुलिकस्तु कुलश्रेष्ठी ← [४८५] इति हैमश्च, यतस्तीर्थकृतां जननमवश्यमेव श्रेष्ठकुले भवति।

पुन: कीदृश: ? काकोलूकिकालू: ☛ काकश्च उलूकश्च इति काकोलूकम् "नित्यवैरस्य" ३-१-१४१ इत्यनेन एकार्थ:, "अदेवासुरादिभ्यो वैरे" ६-३-१६४ इत्यनेन "अकल्"प्रत्यय:, इत्वं च, लित्वात् स्त्रीलिङ्ग:, काकोलूकिका तां लुनाति = छिनत्ति दूरीकरोतीत्यर्थ: ➔ लूग्श् छेदने ← [१५१९] न च तिरश्चामेवान्योन्यं वैराभाव: अपितु सर्वेषामपि देहिनामित्युपलक्षणादवसेयम्।

*अन्वयः* ☛ कुलिकः [कुलीनः] काकोलूकिकालूः [काकोलूकवैरोच्छेदकः] लः [प्रदीप्तः] कलिः [शूरः] लालिककेकिकालिकः [भूपावलिचित्तमयूरमेघः] कालिकः [श्रीअभिनन्दनस्वामी] कालं [मृत्युं यमं वा] लोककलिं [जनानां विवादं विश्वयुद्धं वा] लुलोल [ममर्द]।

## હર્ષનિધિ

ઉત્તમકુળમાં ઉત્પન્ન થનારા, કાક અને ઘુવડ વગેરે સર્વ જીવોનાં વેરનો નાશ કરનારા, દેદીપ્યમાન, શૂરવીર, રાજાઓનાં મનોમયૂરનાં આનંદને કરવામાં મેઘ સમાન શ્રી અભિનંદન સ્વામીએ માનવોનાં વિવાદનું અથવા વિશ્વયુદ્ધનું અને મૃત્યુનું મર્દન કર્યું.

पुनः कीदृशः ? लः = दीप्तः देदीप्यमानत्वात् → लो दीप्तः ← [३०] इत्येकाक्षरीकोषः ।

पुनः कीदृशः ? कलिः = शूरः → कलिर्बिभीतके शूरे ← [२-४६६] इत्यनेकार्थसङ्ग्रहः, बाह्यारीन् प्रति कर्मरिपून् प्रति च प्रभुत्वात् ।

पुनः कीदृशः ? लालिककेकिकालिकः ☞ लः = राजा → लश्च भूपे ← [३०] इत्येकाक्षरीकोषः, अथवा लः = इन्द्रः → लः शक्रे ← [२८-१] इति मेदिनी, तस्य आलिः = आवलिः पङ्क्तिरित्यर्थः → मालाऽऽल्यावलिपङ्क्तयः ← [१४२३] इति हैमः, तस्य कः = चित्तम् → कश्चित्तात्मार्कधीधातृवाताः ← [८-५-३६] इति वैजयन्ती, स एव केकी = मयूरः → मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् शिखावलः शिखी केकी ← [२-५-३०] इत्यमरः, तस्य मुदि कालिकः = मेघः इव, केन = जलेन अलति = अलंकरोति अवनिं स, लालिककेकिकालिकः = राजावलिचित्तमयूरमेघः ।

इति श्रीअभिनन्दनजिनस्तुतिः ।



[ ध - र ]

## श्रीसुमतिनाथजिनस्तुतिः

धाराधरी रराधारु -
धरोऽधारोऽधुराधरः ।
धीरोऽधाराधरो रोध्रा -
धधुरो रुधिराधरः ॥ ७ ॥

# पुण्यवल्लभा

धाराधरी रराधेति ।

धाराधरः = मेघः → जीमूतपर्जन्यबलाहका घनो धाराधरः ← [१६४] इति हैमः, मेघराज्ञः = धाराधरराज्ञः अपत्यं पुमान् धाराधरिः = श्रीसुमतिनाथः, "रो रे लुग्...." १-३-४१ इत्यनेन रकारलोपो दीर्घश्च, स रोध्राधधुरः ☛ रोध्रम् = अपराधः पापमित्यर्थः → रोध्रमघागसौ ← [२-४३९] इत्यनेकार्थसङ्ग्रहः, धः = धर्मः दधाति = धरति दुर्गतौ पततो जीवान् सः, धाधातोः 'ड'प्रत्ययः, → धो ना धर्मे ← [१९-१] इति मेदिनी च, न धः अधः = अधर्मः, धूः = चिन्ता रकारान्तोऽयं स्त्रीलिङ्गश्च शब्दः → धूः = चिन्ता ← [पृ. ३७५] इति हलायुधः, रोध्रं च अधश्च धूश्च इति रोध्राधधुरः = पापाधर्मचिन्ताः, ता रराध = जिहिंस ननाशेत्यर्थः → रधौच् हिंसासंराद्ध्योः ← [११८८] ।

कीदृशो धाराधरिः ? अरुः ☛ रुः = भयम् → रुर्भये च प्रकीर्तितः ← [३०] इत्येकाक्षरीकोषः, नास्ति रुः = भयं यस्य यस्माद् वा स अरुः = निर्भयः अभयप्रदो वा, अथवा रुः = युद्धम् → रुर्ना युद्धे ← [६८] इत्येकाक्षरकाण्डः राघवकविरचितः, नास्ति रुर्यस्य स अरुः = युद्धरहितः अद्वेषित्वात्, अथवा रु = इच्छा → रु जालेच्छयोः कान्तौ ← [११९] इत्येकाक्षरीनाममाला कालिदासव्यासकृता, नास्ति रु यस्य स अरुः = निरीहः केवलित्वात्, अथवा अः = भानुः → अः शिवे केशवे वायौ ब्रह्म-चन्द्राग्निभानुषु ← [५] इत्येकाक्षरनाममालिका विश्वशम्भुनिर्मिता, रु = कान्तिः पूर्वोक्तेः, अ इव रु यस्य स अरुः = सूर्यकान्तिः ज्ञानतेजोभिर्देदीप्यमानत्वाद् ।

***अन्वयः*** ☛ अरुः [निर्भीकः] धरः [धर्मदाता] अधारः [अनृणी] अधुराधरः [अकार्यभारवाहकः] धीरः [विद्वान्] अधाराधरः [शस्त्रत्यक्ता] रुधिराधरः [रक्तोष्ठः] धाराधरिः [श्रीसुमतिनाथस्वामी] रोधाधधुरः [पापाधर्मचिन्ताः] रराध [ननाश] ।

पुनः कीदृशः ? धरः ☛ धः = धर्मः ➔ धो ना धर्मे ← [१९-१] इति मेदिनी, तं राति = ददाति इति धरः = धर्मदाता देशनादायकत्वात् ➔ रांक् दाने ← [१०६९], अथवा धम् = धनम् ➔ धो ना धर्मे कुबेरे च क्लीबं तु वसुनि स्मृतम् ← [१९-१] इति मेदिनी, तद् राति = ददाति इति धरः = धनदाता संवत्सरं यावद् दानस्य कारकत्वात्, अथवा धः = धरणीशः पृथ्वीपतिरित्यर्थः ➔ धनेशो धरणीशश्च धकारः ← [३७] इत्येकाक्षरीमातृकाकोशः, रः = वीरः ➔ रः स्यात् पुमान् शिवे वह्नौ वज्रे कामे रवौ गुरौ अनाथे कपिले पीण्डे वीरे ← [९७] इत्येकाक्षरशब्दमालाऽ - मात्यमाधवकृता, धेषु र इति धरः = राजसु वीरः सर्वदाऽजेयत्वात्, अथवा धम् = श्वेतं ➔ धकारं धर्मबीजं स्यात् श्वेतम् ← [३४] इत्येकाक्षरनाममालाऽज्ञातकृता, रं = रुधिरं ➔ र - क्रोधिनी च भुजङ्गेशी ज्वाली रुधिर-पावकौ ← [४५] इत्येकाक्षरीमातृकाकोशः, धं रं यस्य स धरः = शुक्लरुधिरः तीर्थकृतां रुधिरस्य श्वेतत्वात्, अथवा धः = दिव्यः ➔ धकारम्..... दिव्यम् ← [३४] इत्येकाक्षरी - मातृकाकोशः, रः = ध्वनिः ➔ रो ध्वनौ ← [१६] इत्येकाक्षरनाममालिकाऽमर - चन्द्रकविविरचिता, धो रो यस्य स धरः = दिव्यध्वनिः सुस्वरनामकर्मोदयात् ।

पुनः कीदृशः ? अधारः ☛ धारः = ऋणम् ➔ धारो जलधरासारवर्षणे स्याद् ऋणेऽपि च ← [२-४२१] इत्यनेकार्थसङ्ग्रहः, न धारो यस्य स अधारः अनृणित्वात्, अथवा धा = सम्पत्तिः ➔ धा च धर्मरतिर्मता सम्पत्तौ च ← [१४] इत्येकाक्षरकोषोऽज्ञातकृतः, रः = क्षयः ➔ रः पुमान् पावके कामे क्षये ← [५८] इत्येकाक्षरकाण्डः, धाया र इति धारः = सम्पत्तिक्षयः, न स्यात् धारः = सम्पत्तिक्षयो यस्मात् स अधारः, अथवा अवग्रहरहित एव प्रयोगः, धा = अवनिः ➔ धा धरित्री ← [६५] इत्येकाक्षरनाममाला सौभरिकृता, रः = सहस्रांशुः ➔ रः सूर्येऽग्नौ ← [१०१] इत्येकाक्षरनाममालिका विश्वशम्भुप्रणीता, धायां रइव इति धारः = अवनिसूर्यः अज्ञानतिमिरदूरीकर्तृत्वात् ।

पुनः कीदृशः ? अधुराधरः ☛ धुरा = कार्यभारः तां धरति = वहति स

## હર્ષનિધિ

નિર્ભય, ધર્મની પ્રરૂપણા કરનારા, અનૃણી, કાર્યભાર નથી જેને એવા, વિદ્વાન, શસ્ત્રનો ત્યાગ કરનારા, લાલ હોઠવાળા શ્રી સુમતિનાથસ્વામીએ પાપ, અધર્મ અને ચિંતાનો નાશ કર્યો.

धुराधरः = कार्यभारवाहकः न धुराधरः अधुराधरः, यतो न सर्वज्ञाः स्वशिष्यादीनां व्यवस्थां कुर्वन्ति तेषां रागद्वेषाभावात्, अथवा अवग्रहरहितोऽयं प्रयोगः धुराधुरः धुरां धरतीति धुराधरः शासनधुरायोग्यतमगणभृत्संस्थापकत्वात् ।

पुनः कीदृशः ? धीरः = विद्वान् ➔ विद्वान् सुधीः... अभिरूपधीराः ← [३४१] इति हैमः, प्रबुद्धत्वात्, अथवा धीरः = धैर्यवान् ➔ धीरो ज्ञे धैर्यसंयुते ← [२-४२२] इत्यनेकार्थसङ्ग्रहः, अथवा धीरः = निर्विकारः, महाकविकालिदासोऽपि आह कुमारसम्भवे ➔ विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ← [१-५२] इति, अथवा धीः = बुद्धिः ➔ बुद्धिर्धीः ← [३०८] इति हैमः, तां राति = ददाति स धीरः = बुद्धिप्रदाता सद्बुद्धिदायकत्वात्, अथवा धीः = ज्ञानभेदः ➔ धीर्ज्ञानभेदे ← [१९-२] इति मेदिनी, तां राति स धीरः = ज्ञानदाता अज्ञानतिमिरध्वंसकत्वात् ।

पुनः कीदृशः ? अधाराधरः ☛ धाराधरः = असिः ➔ धाराधरस्तु पयोदकरवालयोः ← [४-२६०] इत्यनेकार्थसङ्ग्रहः, न धाराधरः यस्य स अधाराधरः = असिरहितः अजातशत्रुत्वात् अद्वेषित्वाच्च, धाराधरोपलक्षणात् सर्वशस्त्रत्यक्तृत्वं ज्ञेयम् ।

पुनः कीदृशः ? रुधिराधरः ☛ रुधिरौ = रक्तवर्णौ अधरौ = ओष्ठौ यस्य स रुधिराधरः = रक्तौष्ठः ➔ रुधिरं घसृणे रक्ते ← [३-५९१] इत्येनकार्थसङ्ग्रहः, ➔ ओष्ठोऽधरो रदच्छदः ← [५८१] इति हैमः, रुधिराधरत्वमुत्तमानां लक्षणं यतः प्रायेण स मधुरवाग् भवति ।

ईदृशो धाराधरिः = श्री सुमतिनाथस्वामी रोधाधधुरः = पापाऽधर्मचिन्ताः रराध = ननाश दूरीकृतवानित्याशयः अर्थात् स्वकृत्स्नकर्मक्षयात् श्रीसुमतिनाथः न स्वस्यैव साधनां चकार अपि तु लोकोपकारोऽपि चक्रे, एतेन प्रभोः कृपालुता व्याख्याता, प्रथमं स्वकर्मक्षयं कृतवान् तदनु पृथ्वीवर्तिनोऽधर्मान् दूरीकृत्य परचिन्तामपि दूरीचकारेत्याशयः ।



[ भ - ज ]

## श्रीपद्मप्रभस्वामिस्तुतिः

भो जाऽम्भोजाभ ! भुजौजो -
भूभृज्जेऽभोजि भीभज ! ।
भजाम्भोजाभं भाभाभु -
भूर्भो जजाज ! भाजज ! ॥ ८ ॥

भो जाम्भोजाभ इति ।

भो अम्भोजाभ ☛ अम्भः = पानीयं ➔ पानीयं सलिलं नीरम्..... जीवनं वनमम्भः ← [पृ.-९५९] इति शालिग्रामनिघण्टुभूषणम्, तस्मिन् जायते यत् तद् अम्भोजं = पद्ममित्यर्थः ➔ तज्जलात् सरसः पङ्कात् परैरुड्रुहजन्मजैः ← [२२१४] इति निघण्टुशेषः [११६२] हैमश्च, अम्भोजवद् आभा = कान्तिर्यस्य स अम्भोजाभः = पद्मप्रभः ➔ आभा राढा विभूषा श्रीरभिख्या कान्ति ← [१५१२] इति हैमः, अम्भोजाभः = पद्मप्रभस्वामी, तत्सम्बोधने भो अम्भोजाभ ! ➔ भो सम्बोधने दृष्टः ← [९०] इत्येकाक्षरशब्दमाला माधवप्रणीता, भूः = पृथिवी ➔ भूर्भूमिः ← [२-४] इति सरस्वतीमणिमाला, कीदृशी भूः ? आभुः = व्यापिका विस्तृतेत्यर्थः ➔ आभुः विभौ व्यापके त्रिषु ← [भा.१, पृ.-७५८] इति वाचस्पत्यम्, आभुश्चासौ भूश्चेति आभुभूः, अभोजि = बुभुजे, भवता इति शेषः, सर्वभूमेः स्वामी बभूव इत्यर्थः ➔ भुजंप् पालनाभ्यवहारयोः ← [१४८७] ।

कीदृश अम्भोजाभ ? ज ☛ जः = जेता जयकारक इत्यर्थः ➔ जेता जश्च प्रकथितः सूरिभिः शब्दशासने ← [१४] इत्येकाक्षरीकोषः, कामक्रोधाद्याभ्यन्तरारीन् प्रति सर्वदा जयशीलत्वात् तस्य सम्बोधने ।

ननु आभ्यन्तरारीन् प्रत्येव जयी यद्वा बाह्यारीन् प्रत्यपि ? इत्याशङ्कोपस्थापयन्नाह पुनः कीदृश ? भुजौजोभूभृज्जे ☛ भुजा = बाहुः ➔ भुजा द्वयोर्बाहौ करे ← [८-१२/१३] इति मेदिनी, ओजः = शौर्यम् ➔ बलद्युम्नानि शौर्यौजसी ←

***अन्वयः*** ☛ ज [जयकारक] भुजौजोभूभृज्जे [बाहुशौर्यराजजयन !] भीभज [भयग - जजेतः] भाभ [नक्षत्रकान्ते] अज [अजेय] भाजज [स्वकान्तिकन्दर्पजेतः] भो अम्भोजाभ ! [हे श्रीपद्मप्रभस्वामिन् !] (भवता) आभुभूः [विस्तृत - पृथ्वी] अभोजि [बुभुजे] । भो जज ! [हे योद्धः !] अम्भोजाभं [श्रीपद्मप्रभस्वामिनम्] भज [सेवस्व] ।

[७९६] इति हैमः, भुजायाम् ओजो येषां ते भुजौजसः, भूभृतः = राजानः ➔ राजा राट्पृथिवीशक्रमध्यलोकेशभूभृतः ← [६८९] इति हैमः, भुजौजसश्च ते भूभृतश्च इति भूजौजोभूभृतः तेषां जिः = जयनं यस्य स भूजौजोभूभृज्जिः = बाहुशौर्यराजजेता ➔ जयने जिः प्रकीर्तितः ← [पृ.-२९] इति मेदिनीटिप्पणी, तस्य सम्बोधने।

पुनः कीदृश ? भीभज ☛ भीः = भयम् ➔ भयं भीर्भीतिरातङ्कः ← [३०१] इति हैमः ➔ भीर्भयं कथितं बुधैः ← [२७] इत्येकाक्षरीकोषश्च, इभः = गजः ➔ द्विरदगजमतङ्गजेभ ← [१९-१३] इति राजनिघण्टुः, भीरेव इभ इति भीभः = भयगजः तस्य जः = जेता पूर्वोक्तेः, भीभजः = भयगजजेता तस्य सम्बोधने प्रयोगः।

पुनः कीदृश ? भाभ ☛ भं = नक्षत्रं ➔ नक्षत्रे भं बुधाः प्राहुः ← [२६] इत्येकाक्षरीकोषः ➔ नक्षत्रं तारका तारा ज्योतिषी भम् ← [१०७] इति हैमश्च, आभा = कान्तिः ➔ आभा राढा विभूषा श्रीरभिख्याकान्तिविभ्रमाः ← [१५१२] इति हैमः, भमिव आभा यस्य स भाभः = नक्षत्रकान्तिः प्रकाशमानत्वात्, 'नक्षत्रकान्तिः' इत्यस्य न्यूनत्वादर्थान्तरमाह, भा = सूर्यः ➔ भा भास्करे भास्वरे ← [९१] इत्येकाक्षरनाममालिका विश्वशम्भुरचिता, भः = दीप्तिः ➔ आकाशदीप्ति - नक्षत्रचारदैवज्ञसिद्धमन्त्रे च अभिमतभावे भौमे भः शब्दः ← [३८] इत्यजिरादि - एकाक्षरीनाममाला, भा इव भो यस्य स भाभः = सूर्यकान्तिः भामण्डलेन विना द्रष्टुमशक्यत्वात्, अथवा अत्र 'भ' 'अभ' इति विशेषणाभ्यां श्लेषः कर्तव्यः, भः = श्रेष्ठः सर्वगुणैरलङ्कृतत्वात् ➔ भकारं भार्गवं ज्ञेयं ज्योतिषाभमनामयम्, आयुरारोग्यपदं श्रेष्ठम् ← [३९] इत्येकाक्षरनाममालाऽज्ञातविद्वत्कृता, अथवा भः = सुधीः सर्वशास्त्रपारङ्गतत्वात् ➔ भकारः पुंसि जलभे (दे) छादे शम्भौ शिलीमुखे सुधीः ← [५] इत्येकाक्षरशब्दमालाऽमात्यमाधवकृता, इत्याद्यं विशेषणमपरञ्च अभ - भः = आकुलोऽतिभीतो वा ➔ भोऽतिभीते भ आकुले ← [९१] इत्येकाक्षरनाममाला विश्वशम्भुप्रणीता, न भ इति अभः = अनाकुलो निर्भयो वा सहनशीलत्वाच्छौर्यवत्त्वाच्च, अथवा भः = अलङ्कारः ➔ भः शब्दः स्यादलङ्कारे ← [२१] इत्यजिरादि -

## હર્ષનિધિ

કામ ક્રોધાદિ શત્રુને જીતનારા, બાહુમાં છે શૌર્ય જેને એવા રાજાઓને જીતનારા, ભયરૂપી હાથીને જીતનારા, નક્ષત્રસમકાન્તિવાળા, અજેય, સ્વકાન્તિથી કંદર્પને જીતનારા હે પદ્મપ્રભસ્વામી ! આપ વ્યાપકભૂમિનાં સ્વામી થયા. હે યોદ્ધા ! તું શ્રીપદ્મપ્રભસ્વામીની સેવા કર.

एकाक्षरीनाममाला, नास्ति भो यस्य स अभः = अलङ्काररहितः निष्परिग्रहित्वात्, सर्वेषां विशेषणानां सम्बोधने प्रयोगः ।

पुनः कीदृश ? अज ☛ जः = जयनम् विजय इत्यर्थः → जयने जः प्रकीर्तितः ← [१३] इत्येकाक्षरीकोषः, नास्ति जः = विजयो यस्मात् स अजः = अजेय इत्यर्थः, अथवा जः = जन्म → जो जन्याम् जातमात्रे च ← [१-८] इत्यने - कार्थसङ्ग्रहः [१] विश्वश्च, जनी जन्मेत्यर्थः, नास्ति जो यस्य स अजः = अजन्मा इति भावः, अथवा जः = मत्सरः → जो जये विजये मेरौ शब्दे जेतरि मत्सरे ← [३१] इत्येकाक्षरकाण्डः राघवकविप्रणीतः, न जो यस्य स अजः = मत्सररहितः निष्कषायत्वात्, अथवा जः = जारः परस्त्रीलम्पट इत्यर्थः → जो जारः ← [३८] इत्येकाक्षरनाममाला सौभरिकृता, न जो यः स अजः = अजारः निष्कामित्वात्, अथवा अजः = चन्द्रः → अजो हरौ हरे कामे विधौ ← [२] इति विश्वः, सर्वजीवान् शैत्यप्रतीतिकारकत्वाद् आह्लादकत्वाच्च, तत्सम्बोधने ।

पुनः कीदृश ? भाजज ☛ भा = दीप्तिः कान्तिरित्यर्थः → दीप्तिर्भा स्याद् ← [२७] इत्येकाक्षरीकोषः, भाभिः = स्वदेहकान्तिभिः, अजः = कामदेवः → अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे ← [२-६४] इत्यनेकार्थसङ्ग्रहः, तस्य जः = जेता → जो जेता ← [३५] इत्येकाक्षरनाममालिका विश्वशम्भुविरचिता, भाजजः = स्वकान्तिभिः कन्दर्पस्य विजेता कन्दर्पादप्यधिकलावण्यवत्त्वात्, तस्य सम्बोधने ।

पद्मप्रभस्वामिनं प्रस्तुत्य अथ योद्धारमाह भो जज ! = हे योद्धः ! भोः सम्बोधने उक्तोक्तेः → जजः योधे ← [भा.-२, पृ.-९६२] इति शब्दार्थचिन्तामणिः, तत्सम्बुद्धौ हे जज ! त्वम् अम्भोजाभं = श्रीपद्मप्रभस्वामिनम् ईदृशगुणैरलङ्कृतं भज = सेवस्व → भजीं सेवायाम् ← [८९५] कृतं तदतिरिक्तदेवसेवयेति ।

इति श्रीपद्मप्रभस्वामिस्तुतिः ।

★ ★ ★

[ र - स ]

## श्रीसुपार्श्वनाथजिनस्तुतिः

रसासूरौरसोस्रै र -
सूरः सुसोर सारसः ।
सूरिरसरसोऽसार
संसाररसरसारसः ॥ ९ ॥

रसासूरौरसोस्रैः इति ।

रसा = पृथ्वी → सर्वंसहा रत्नगर्भा जगती मेदिनी रसा ← [९३७] इति हैमः, सूः = गर्भमोचनं प्रसव इत्यर्थः → सूशब्दः प्रेरणे गर्भमोचने ← [१-७२] इति नानार्थरत्नमाला, रसायाः = पृथ्वीनाम्न्या राज्ञ्याः सूः = प्रसवः यस्य स रसासूः = श्रीसुपार्श्वनाथस्वामीत्यर्थः, स औरसोस्रैः ☛ औरसाः = शारीरिकाः, उरसा निर्मिता "अण्" → औरसः - उरसा निर्मितः ← [भा.-१, पृ.-४४९] इति शब्दार्थचिन्तामणिः, नैसर्गिका वा, उस्राः = अंशवः किरणा इत्यर्थः → रोचि-रुस्र-रुचि-शोचिरंशु ← [९९] इति हैमः, शारीरिकाः = देहजाः नैसर्गिकाः = अपार्थिवाः, औरसाश्चामी उस्राश्च ते औरसोस्राः, तैः औरसोस्रैः सुसोर = दिदीपे शुशुभे इत्यर्थः → सुरत् ऐश्वर्यदीप्त्योः ← [१३९७] श्रीसुपार्श्वनाथस्वामी स्ववपुष एव अथवा स्वाकृत्रिमैरंशुभिरेव अदीप्यत न चान्यद्रव्यत इत्याशयः ।

कीदृशो रसासूः ? रसूरः ☛ रः = भूमिः पृथिवीत्यर्थः → रश्च रामेऽनिले वह्नौ भूमावपि ← [२९] इत्येकाक्षरीकोषः, सूरः = सूर्यः → भानुर्विवस्वान् सूरः ← [९६] इति हैमः, रे = भूमौ सूरः = सूर्यः इव इति रसूरः = अवनिसूर्यः स्वज्ञानेन सर्वेषां प्रकाशकत्वात्, अथवा रं = धनम् → रं रत्नं रोदनं धनम् ← [८३] इत्येकाक्षरनाममाला सौभरिकृता, सु = ज्ञानम् → सुस्तदागर्भमोक्षे च सन्धाने विनिवारणे ज्ञाने रथपथे चैव त्रिलिङ्ग इति संस्मृतः ← [११३] इत्येकाक्षरशब्दमालाऽ -

*अन्वयः* ☛ रसूरः [अवनिसूर्यः] सारसः [सुमनाः] सूरिः [विद्वान्] असरसः [कोपविषाभाववान्] असारसंसारसरस्सारसः [असारसंसारकासारकमलम्] रसासूः [श्रीसुपार्श्वनाथस्वामी] औरसोस्रैः [नैसर्गिकांशुभिः] सुसोर [दिदीपे]।

मात्यमाधवप्रणीता, उः = मोक्षः → उश्च शम्भौ मोक्षोर्ध्वशक्तिषु ← [६] इत्येकाक्षरीय - प्रथमकाण्डः परमानन्दनन्दनविरचितः, तान् राति = ददातीति रसूरः = धनज्ञान - मोक्षदाता सर्वेषां दाने समर्थत्वात्, एतेन जीवेभ्यो यथायोग्यं कृपालुतया प्रयच्छतीति व्याख्यातम्, अथवा अत्र 'औरसोस्नैः असूरः' इति श्लेषः कर्तव्यः, असूरः सूः = धरा पृथिवीत्यर्थः → सूर्धरा ← [९३] इत्येकाक्षरनाममाला सौभरिकृता, रः = स्मयः आश्चर्य इत्यर्थः → रः स्मये ← [पृ.२५० - पं.१] इति शब्दरत्नसमन्वयः, सूश्च रश्च इति सूरौ, न विद्येते सूरौ यस्य स असूरः = धराविस्मयरहितः निष्परिग्रहित्वात्, सर्वज्ञत्वात् ।

पुनः कीदृशः ? सारसः = सुमनाः प्राज्ञो वा → सारसः पुष्कराख्येन्द्वोः सुमनाः प्राज्ञदेवयोः ← [३-८०२] इत्यनेकार्थसङ्ग्रहः, शोभनं मनो यस्य स सुमना मनोविशुद्धेः, प्राज्ञः = मनीषी प्रबुद्धत्वात्, अथवा सारः = श्रेष्ठः → सारस्त्रिषु वरे श्रेष्ठे ← [भा.-४, पृ.-८१७] इति शब्दार्थचिन्तामणिः, सः = धर्मः → सकारः पुंसि साकारे गौरीपुत्रे प्रभञ्जने धर्मे ← [११२] इत्येकाक्षरशब्दमालाऽमात्यमाधवरचिता, सारः सो यस्य यस्माद् वा स सारसः = श्रेष्ठधर्मप्ररूपकः सर्वजीवानां हितकामित्वाद् ।

पुनः कीदृशः ? सूरिः = विद्वान् सुधीत्वात् → विद्वान् सुधीः... मेधाविकोविद-विशारद-सूरि ← [३४१] इति हैमः, अथवा सूरिः = धीरः फलाशंसारहितत्वात् → सूरिः पुंसि धीरे ← [८९४] इति शब्दार्थचिन्तामणिः ।

पुनः कीदृशः ? असरसः ☛ सः = कोपः → सः कोपे वरुणे सः स्याद् ← [३५] इत्येकाक्षरीकोषः, रसः = विषः → विषे जले निर्यासे वृक्षरसविशेषे पारदे रागे वीर्येऽपि रस इष्यते ← [३०] इत्यनेकार्थनाममालाभाष्यम्, स एव रसः सरसः = कोपविषः, नास्ति सरसो यस्य स असरसः = कोपविषाभाववान् निष्कषाय - त्वात्, विषवत् कोपस्यापि आत्मघातकत्वादुभयोरुपमोपमेयत्वम्, अथवा सः = श्रीः लक्ष्मीरित्यर्थः → श्री-श्रुतेऽपि सः ← [१] इति विश्वलोचनकोशः, रसः = रागः अनेकार्थनाममालाभाष्यवचनाद्, नास्ति सस्य = लक्ष्म्याः रसः = रागः यस्य स

# હર્ષનિધિ

પૃથ્વીમાં સૂર્યસમાન, શ્રેષ્ઠ મનવાળા, વિદ્વાન, કોપરૂપી વિષ નથી જેને એવા, અસાર સંસાર રૂપી સરોવરને વિશે કમળ સમાન શ્રી સુપાર્શ્વનાથ સ્વામી અપાર્થિવ કિરણોથી દેદીપ્યમાન થયા.

असरसः = लक्ष्मीं प्रत्यनासक्तः वैराग्ययुक्तत्वात्, अथवा सः = शङ्का सन्देह इत्यर्थः ➔ सः पुंसि मदने वायौ परोक्षसूर्ययोरपि सनातने सत्यवति शङ्कायाम् ← [१३७] इत्येकाक्षरीनाममाला कालिदासव्यासकृता, रः = भयम् ➔ भये रश्च प्रकीर्तितः ← [२६] इत्येकाक्षरकोषो महाक्षपणकविरचितः, सः = कामः ➔ सः कामे वरणे प्रोक्तः ← [३४] इत्येकाक्षरकोषो महाक्षपणकविरचितः, सश्च रश्च सश्च इति सरसाः = शङ्काभयकामाः, न विद्यन्ते सरसा यस्य स असरसः = सन्देहभयकामरहितः सर्वज्ञत्वात्, शौर्यवत्त्वात्, वीतरागत्वात् ।

पुनः कीदृशः ? असारसंसारसरसारसः ☛ असारः = साररहितः सारः = श्रेष्ठः ➔ सारो मज्जास्थिरांशयोः बले श्रेष्ठे ← [२-४५५] इत्यनेकार्थसङ्ग्रहः, न विद्यते सारो यस्मिन् स असारः, संसारः = जगद् ➔ संसारो विश्वे ← [पृ.-५१८७] इति वाचस्पत्यम्, असारश्चासौ संसारश्चेति असारसंसारः, सरं = कासारः अकारान्तोऽयं नपुंसकलिङ्गः ➔ सरम् = सरोवरः ← [पृ.-६९८] इति हलायुधः, सारसः = कमलम् ➔ सारसः सरसिजेन्द्वोः ← [७] इत्यनेकार्थनिघण्टुः ➔ वा पुंसि पद्मं नलिनं..... सारसं सरसीरुहम् ← [४.१-२] इति भावप्रकाशश्च, असारसंसार एव सरम् असारसंसारसरम्, तस्मिन् सारसः कमलसमानः असारसंसारसरसारसः = असारसंसारसरोवरकमलम्, यद्यपि असारसंसारेऽस्मिन् सर्वमसारमेव तथापि सरसि यथा सर्वेषां मलिनत्वेऽपि अरविन्दस्य विद्यमानता तथैवास्मिन् संसारे सर्वेषामसारत्वेऽपि जिनस्य सारता संसारसरोऽलिप्तत्वात् प्रशस्तगुणैरलङ्कृतत्वाच्च ।

इति श्रीसुपार्श्वनाथजिनस्तुतिः ।

★★★

[ श - भ ]

## श्रीचन्द्रप्रभस्वामिस्तुतिः

शुभ्र ! भोः शशिभेशाऽभीः
शशाशाश ! शशीश ! श ! ।
शौभैः शम्भो ! शुभाशाभोऽ -
भाशुभ ! शुशुभे शिशौ ॥ १० ॥

★ ★ ★

शुभ्र भोः शशिभ इति।

शशिभ ☛ शशी = चन्द्रमाः ➔ शशी विधुः सुधासूतिः ← [४७] इति नाममाला धनञ्जयरचिता, शशिवद् भाति इति शशिभः, यद्वा शशीव भा = विभा प्रभेत्यर्थः, यस्य स शशिभः ➔ भा मयूख-महसी छवि-र्विभा ← [१००] इति हैमः, यथा तुहीनदीधितिः स्वविभाभिस्तप्तमुपशाम्यति तथैवायं प्रभुः स्वप्रभाभिः कर्मणा दग्धस्योपशमनं कुरुते - तस्य सन्तापं हरतीत्याशयः, शशिभः = श्रीचन्द्रप्रभस्वामी तस्य सम्बोधने प्रयोगः भोः शशिभ ! भवान् शिशौ = बाले सति ➔ अर्भकः शिशुः ← [१.२५] इति लक्ष्मीनिवासः (उणादिकोशः), शौभैः शौभाः = देवाः ➔ शौभा निलिम्पा द्युषदः स्वर्गिणश्च नभःसदः ← [१-५] इति त्रिकाण्डशेषः, तैः शौभैः सह शशाश = जम्पां कृत्वा क्रीडयामास ➔ शश प्लुतिगतौ ← [४९३] शुशुभे = दिदीपे च ➔ शुभि दीप्तौ ← [९४७], यतो भगवतो महिम्नः सुमनसोऽपि क्रीडार्थमुपार्हदायाताः, एतेन भगवतो महिमा व्याख्यातः, भोः सम्बोधने ➔ सम्बोधनेऽङ्ग रे रेरेऽरेरेऽरे भोः ← [२८००] इति सुशीलनाममाला।

कीदृश शशिभ ? शुभ्र ! ☛ शुभ्रः = धवलः ➔ गौरशुभ्रवलक्षधवलार्जुनाः ← [१३९३] इति हैमः, उज्ज्वलवपुस्त्वात्, न च तनोरेव धवलिमा चित्तस्यापि च मनोमालिन्याभावात् तत्सम्बोधने।

पुनः कीदृश ? ईश ! ☛ ईशः = नेता ➔ अधीपस्त्वीशो नेता ← [३५८] इति हैमः, चतुर्धासङ्घनायकत्वात्, तस्य सम्बोधने।

***अन्वयः*** ☙ शुभ्र [धवल] ईश [नेतः] अभीः [निर्भय] अश [अप्रमत्त] शशीश [शशिस्वामिन्] श [सुखकारक] शम्भो [तीर्थङ्कर] अशुभाशाभः [पापेच्छातिरस्कृत्] अभाशुभ [भवनदुष्कृताभाववन्] भोः शशिभ [हे चन्द्रप्रभस्वामिन्] (भवान्) शिशौ [बाले सति] शौभैः [सुरैः] (सह) शशाश शुशुभे (च)।

पुनः कीदृश ? अभीः ☛ भीः = भयम् ➔ भीर्भयं कथितं बुधैः ← [२७] इत्येकाक्षरीकोषः, नास्ति भीर्यस्य यस्माद् वा स अभीः = निर्भयः अतीववीर्यवत्त्वात् अभयदायको वा प्राणातिपाताऽकारकत्वात् तस्य सम्बोधने ।

पुनः कीदृश ? अश ☛ शः = शयनं ➔ शयने शः समाख्यातः ← [३३] इत्येकाक्षरीकोषः, नास्ति शो यस्य स अशः = अशयनः अप्रमादीत्यर्थः अप्रमत्तत्वात् शयनस्य प्रमादरूपत्वात्, अथवा शः = हिंसा शस्त्रं वा ➔ हिंसायां शो निगद्यते ← [३३] इत्येकाक्षरीकोषः ➔ शश्च शस्त्रके ← [१] इति विश्वश्च, नास्ति शः यस्य स अशः = अहिंसकः निःशस्त्रो वा जीवदयाप्रतिपालकत्वात्, अथवा शः = मृत्युः ➔ 'श' मृत्युः ← [४८] इत्येकाक्षरीमातृकाकोशः, नास्ति शो यस्य स अशः = मृत्युरहितः सिद्धत्वात् सर्वेषां विशेषणानां सम्बोधने ।

पुनः कीदृश ? शशीश ☛ शशी = चन्द्रः ➔ अब्जो राजा शशी चन्द्रो मृगाङ्को रजनीकरः ← [५९] इति गणितनाममाला हरिदत्तनिर्मिता, शशिन ईशः शशीशः, यतः जन्मत एव किञ्चिदपि लाञ्छनं तीर्थकृच्चरणे भवति, चन्द्रप्रभस्वामिन - श्चरणे लक्ष्मत्वेन चन्द्र आसीत्, यथा सेवकः स्वस्वामिनश्चरणे सदैव तिष्ठति तथैव चन्द्रोऽयं किङ्करीभूय चन्द्रप्रभस्वामिनश्चरणमुररीचकार, तस्मात् शशिन ईशोऽयं चन्द्रप्रभस्वामी इति, शशीशः = शशिस्वामी तस्य सम्बोधने ।

पुनः कीदृश ? श ! ☛ शः = शङ्करः सुखकारक इत्यर्थः ➔ शं सुखं शङ्करः ← [३३] इत्येकाक्षरीकोषः, ➔ त्वं शङ्करोऽसि भुवनत्रयशङ्करत्वात् ← [२५] इति भक्तामरस्तोत्रवचनात्, अथवा शः = भूपः ➔ शो वाल्मीके शिवे कूर्मे भूपे ← [७१] इति नानार्थरत्नमाला, अथवा शः = स्वच्छः निर्मल इत्यर्थः कर्ममालिन्यरहितत्वात् ➔ तथा स्वच्छे शः ← [१०९] इत्येकाक्षरनाममालिका विश्वशम्भुविरचिता, सर्वेषां सम्बोधने ।

पुनः कीदृश ? शम्भो ! ☛ शम्भुः = तीर्थङ्करः ➔ शम्भुः स्वयम्भूर्भगवान् जगत्प्रभुस्तीर्थङ्करः ← [२४] इति हैमः, तस्य सम्बोधने ।

## હર્ષનિધિ

તન અને મનથી ઉજ્જ્વલ, ચતુર્વિધસંઘનાં નાયક, નિર્ભય, અપ્રમત્ત, ચંદ્રનાં સ્વામી, સુખને કરનારા, તીર્થંકર, પાપની ઇચ્છાનો તિરસ્કાર કરનારા, ઘર નથી જેને એવા = અણગાર અને દુષ્કૃત નથી જેને એવા હે ચન્દ્રપ્રભસ્વામી ! આપ બાળક હતા ત્યારે દેવોની સાથે કૂદકામારીને રમ્યા અને શોભ્યા.

पुनः कीदृश ? अशुभाशाभः ☛ अशुभम् = पापम् ➔ अशुभं दुष्कृतं दुरितं पापम् ← [१३८०] इति हैमः, आशा = इच्छा ➔ आशेच्छेहातृड्मनोरथाः ← [४३०] इति हैमः, अशुभस्य आशा अशुभाशा तां बभस्ति = तिरस्करोति इति क्विप् "अशुभाशाभस्" - सकारान्तः ➔ भसक् भर्त्सनदीप्त्योः ← [७५] सौत्रोऽयं धातुः, तस्य सम्बोधने अशुभाशाभः = पापेच्छातिरस्कारक ! ननु पापस्यैवेच्छायास्तिर - स्कारको यद्वा सर्वेच्छायास्तिरस्कारकः ? किं सर्वज्ञाः शुभेच्छायां प्रवर्तन्ते ? न "शौभैः शम्भो ! शुभाशाभः" इति तृतीयचरणं "शुभाशाभः" नेदमवग्रहयुक्तं, न च प्रभोरेकमेव विशेषणम्, अपि तु द्वे, यथा शुभ ☛ शुभं = मङ्गलं ➔ श्वः - श्रेयसं शुभशिवे ← [८६] इति हैमः, जिनस्य मङ्गलस्वरूपत्वात् तस्य सम्बोधने, इदमाद्यं विशेषणमपरञ्च "आशाभस्" आशाभाः = इच्छातिरस्कृत् इच्छानिरोधक इत्यर्थः, जिनस्य निरीहत्वात् तस्य सम्बोधने, इत्यपि चापरया रीत्या भावनीयम् ।

पुनः कीदृश ? अभाशुभ ! ☛ भः = भवनं ➔ भवने भः प्रकीर्तितः ← [२६] इत्येकाक्षरीकोषः, अशुभं = दुष्कृतम् ➔ अशुभं दुष्कृतम् ← [१३८०] इति हैमः, भश्च अशुभञ्च इति भाशुभे, न स्तो भाऽशुभे यस्य स अभाशुभः, अभाशुभः = भवनदुष्कृताभाववान् अनगारत्वात्, सदैव सुकृतकारित्वात् तस्य सम्बोधने ।

इति श्रीचन्द्रप्रभस्वामिस्तुतिः ।

★ ★ ★

[ म - र ]

## श्रीसुविधिनाथजिनस्तुतिः

ररमामुर्मारिरेरा -
ममममममरामराः ।
मर्मरां मारिमाराम -
मिरं रामं रमारमम् ॥ ११ ॥

# पुण्यवल्लभा

ररमामुरिति ।

रामम् ☛ रमानाम्न्या जनन्या अपत्यं पुमान् रामः = श्रीसुविधिनाथस्वामी तम्, अमरामराः ☛ अमरा = इन्द्रपुरी इन्द्रस्य अमरावती नगरीत्यर्थः → अमरा त्वमरावती ← [३-५०७] इत्यनेकार्थसङ्ग्रहः, अमराः = देवाः → तत्सदस्त्वमराः, देवाः ← [८७-८८] इति हैमः, अमराया अमरा अमरामराः, आमुः = भेजिरे → अम शब्दभक्त्योः ← [३९१] अमरावतीनगर्या अमराः श्रीसुविधिनाथस्वामिनः परिचर्यां चक्रिरे इत्याशयः ।

कीदृशं रामं ? ररम् ☛ रः = धनम् → रश्च रामेऽनिले वह्नौ भूमावपि धनेऽपि च ← [२९] इत्येकाक्षरीकोषः, रं = धनं राति = ददाति इति ररः = अर्थदाता तम्, "आतो डोऽह्वावामः" ५-१-७६ इत्यनेन डः प्रत्ययः ।

पुनः कीदृशम् ? माररेराम् ☛ मारः = स्मरः → मधुदीपमारौ मधुसारथिः स्मरः ← [२२७] इति हैमः, रः = अग्निः → रश्च रामेऽनिले वह्नौ ← [२९] इत्येकाक्षरीकोषः, इरा = जलम् → इराम्भोवाक् ← [२-३८५] इत्यनेकार्थसङ्ग्रहः, मार एव रः माररः कामाग्निस्तदुपशमने इरा इव इति माररेरा = कामाग्निनीरम्, ताम् ।

पुनः कीदृशम् ? अममम् ☛ मम = ममत्वमनुरागदृष्टिरित्यर्थः अव्ययमिदम्, → मम = षष्ठ्यन्तकप्रतिरूपकमव्ययम्, ममेत्यभिमाने ← [भा.-३, पृ.-५३२] इति शब्दार्थचिन्तामणिः, न मम यस्य स अममः = निर्ममः निर्मोहित्वात् तम् ।

*अन्वयः* ☙ ररम् [अर्थदातारम्] माररेराम् [कामाग्निनीरम्] अममम् [निर्ममम्] मर्मराम् [तत्त्वदायकम्] मारिमाराममिरम् [मृत्युहिंसाऽऽमयमारकम्] रमारमम् [पत्नीवल्लभम्] रामम् [श्रीसुविधिनाथस्वामिनम्] अमरामराः [अमरावतीनगर्याः सुराः] आमुः [भेजिरे] ।

## હર્ષનિધિ

ધનને આપનારા, કામરૂપી અગ્નિને વિશે નીર સમાન, નિર્મમ, તત્ત્વને આપનારા, મૃત્યુ - હિંસા અને રોગને હણનારા, પત્નીવલ્લભ એવા શ્રી સુવિધિનાથ ભગવાનની અમરાવતી નગરીનાં દેવોએ સેવા કરી.

पुनः कीदृशम् ? मर्मराम् ☞ मर्म = तत्त्वम् नकारान्तोऽयम् ➔ मर्म तत्त्वम् ← [पृ.-५१८/५१९] इति हलायुधकोशः, तद् राति = ददाति इति क्विप् मर्मराः = तत्त्वदायकः, तम् मर्मराम्, यतस्तीर्थकृद्वचने व्यर्थता न किन्तु मर्म एव इत्यभिप्रायः ।

पुनः कीदृशम् ? मारिमाराममिरम् ☞ मारिः = सर्वव्यापी मृत्युः, तदुत्पत्तौ तत्क्षेत्रस्थानां सर्वेषां पञ्चत्वं स्याद् ➔ मरको मारिः ← [३२५] इति हैमः, मारः = हिंसा ➔ अपासनं वर्जनमारपिञ्जाः ← [३७२] इति हैमः, अथवा मारः = कन्दर्पः ➔ प्रद्युम्नो मन्मथः कामो मारो मनसिजः स्मरः ← [१-१-२७] इति वैजयन्तीकोषः, आमः = आमयः रोग इत्यर्थः ➔ आम आमय आकल्यम् ← [४६३] इति हैमः, मारिश्च मारश्च आमश्च इति मारिमारामाः = मृत्युहिंसाऽऽमयाः तान् मृणाति = हन्ति इति क्विप् ➔ मृश् हिंसायाम् ← [१५३०] मारिमाराममीः "ॠतां क्ङितीर्" ४-४-११६ इत्यनेन ॠतः "इर्", तम् मारिमाराममिरम् = मृत्युहिंसाऽऽमयमारकम्, एतेन आर्हतातिशयोऽपि व्याख्यातः ।

पुनः कीदृशम् ? रमारमम् ☞ रमा = लक्ष्मीः ➔ लक्ष्मीः पद्मा रमा ← [२२६] इति हैमः, रमः = प्रियः, रमाया रमो रमारमः = लक्ष्मीप्रियः तम्, यतः लक्ष्मीः सदैवास्य समीपमेवागाद्, अथवा रमा = स्त्री रमयति सर्वान् या सा, तस्याः रमः = प्रियः कान्त इत्यर्थः ➔ रमः कान्ते ← [२-३२५] इत्यनेकार्थसङ्ग्रहः, रमारमः = स्त्रीप्रियः पत्नीवल्लभत्वात् तम् ।

इति श्रीसुविधिनाथजिनस्तुतिः ।

★ ★ ★

[ द - न ]

## श्रीशीतलनाथजिनस्तुतिः

दानदानु ददौ नेनो
नन्देननन्दनौदनः ।
निदानुनदनुर्दानी
दुन्दुना नन्दनाननः ॥ १२ ॥

दानदानु ददाविति ।

नन्देननन्दनौदनः ☛ नन्दानाम्नी राज्ञी, तस्या इनः = पतिः → पतीन्द्र - स्वामिनाथ..... ईशितेनः ← [३५९] इति हैमः, नन्देनः = दृढरथराजा नन्दाराज्ञीपतिः, तस्य नन्दनः = सूनुः → नन्दनः पुनरुद्वहोऽङ्गात्मजः सूनुः ← [५४१/५४२] इति हैमः, नन्देननन्दनः = श्रीशीतलनाथस्वामी स एव ओदनः = पर्जन्यः → ओदनोऽस्त्री भवेदन्ने क्ली मेघे काञ्जिके पुमान् ← [९३०] इति वाङ्मयार्णवः, नन्देननन्दन एव ओदन इति नन्देननन्दनौदनः = श्रीशीतलनाथस्वामिपर्जन्यः, दानं द्रव्य-भावाभ्याम् आद्यमर्थ-हिरण्यादिभिः अपरञ्च व्रतमहाव्रतादिभिः, अथवा दानं = त्यागः → दानमुत्सर्जनं त्यागः ← [३८६] इति हैमः, तदेव दानु = वृष्टिः → दानु दाने वर्षणे ← [भा.-५, पृ.-३५४३] इति वाचस्पत्यम्, दानदानु = दानवृष्टिः, तद्, दुन्दुना = दिव्यदुन्दुभिवाद्येन सह → दुन्दुर्वसुदेवे दुन्दुभिवाद्ये ← [भा.-१, पृ.-१२१७] इति शब्दार्थचिन्तामणिः, ददौ = दत्तवानित्यर्थः → दां दाने ← [७], यतः प्रभोः प्रभावाद् देवा अपि स्वदुन्दुभिर्जनानाह्वयन्ति ।

कीदृशः स नन्देननन्दनौदनः ? नेनः ☛ नाः = नेतारः → नेता नश्च समाख्यातः ← [२२] इत्येकाक्षरीकोषः, इनः = सूर्यः → विकर्तनो हरिः शुचीनौ ← [९७] इति हैमः, नेषु = नेतृषु इनः = सूर्यः इव इति नेनः = नायकसूर्यः ।

पुनः कीदृशः ? निदानुनदनुः ☛ निदाः = निन्दकाः → निदो निन्दके ←

*अन्वयः* ☛ नेनः [नायकार्कः] निदानुनदनुः [निन्दकप्राणिपञ्चाननः] दानी [दाता] नन्दनाननः [आनन्ददायिवदनवान्] नन्देननन्दनौदनः [श्रीशीतलनाथ - स्वामिपर्जन्यः] दानदानु [दानवृष्टिं] दुन्दुना [दुन्दुभिवाद्यैः] (सह) ददौ ।

## હર્ષનિધિ

નાયકોને વિશે સૂર્યસમાન, મિથ્યાત્વી સ્વરૂપ પ્રાણિઓને દૂર કરવામાં સિંહસમાન, દાન કરનારા, આનંદદાયી મુખવાળા શ્રીશીતલનાથસ્વામી રૂપી પર્જન્યએ દુંદુભિની સાથે દાનરૂપી વૃષ્ટિ વરસાવી.

[भा.-५, पृ.-४०६५] इति वाचस्पत्यम्, सत्यप्रदर्शित्वादस्य निन्दां कुर्वन्ति केचिन्मिथ्यादृष्टयः स्वमतासमीचीनताऽसमञ्जसताप्रागट्यात्, आनवः = प्राणिनः, ➔ आनुः प्राणिनि ← [भा.-१, पृ.-७३०] इति वाचस्पत्यम्, निदाश्च अमी आनवश्च इति निदानवः, तत्र नदनुः = पञ्चाननः इव ➔ नदनुः पुंसि मेघे सिंहे ← [भा.-२, पृ.-१३३२] इति शब्दार्थचिन्तामणिः, निदानुनदनुः = निन्दकप्राणिपञ्चाननः ।

पुनः कीदृशः ? दानी = दाता, धनसम्पत्तिं ज्ञानसम्पत्तिं वा यथायोग्यं भव्येभ्यो ददाति अतः दानी = भुक्तिमुक्तिप्रदः इत्याशयः, दानम् = त्यागः तदस्ति यस्य स दानी "अतोऽनेकस्वरात्" ७-२-६ इत्यनेन "इन्"प्रत्ययः ।

पुनः कीदृशः ? नन्दनाननः ☞ नन्दनम् = आनन्दप्रदम् ➔ नन्दनस्तु तनये हर्षकारिणि ← [३-३७७] इत्यनेकार्थसङ्ग्रहः, आननं = वदनम् ➔ लपनं वदनानने ← [५७२] इति हैमः, नन्दनं वदनं यस्य स नन्दनाननः = आनन्ददायिवदनवान् जिनस्य कौमुदीपतिवत् सौम्यत्वात् आह्लादकत्वाच्च ।

इति श्रीशीतलनाथजिनस्तुतिः ।

★ ★ ★

[ क - श ]

## श्रीश्रेयांसनाथजिनस्तुतिः

ककोऽकेशोऽशिकाङ्केशोऽ
कोशोऽकाशोऽकृशः कुकः ।
कुशकोशं शशाकाशः
काशकोऽशोककौशिकः ॥ १३ ॥

# पुण्यवल्लभा

ककोऽकेश इति ।

अशिकाङ्केशः ☙ असिः = खड्गः ➔ असिपर्यायाणाम् - अयम् असिः खड्गः मण्डलाग्रः करवालः ऋष्टिरित्येवमादयः ← [पृ.-८] इति लिङ्गवृत्तिविचारः, अत्र शसयोः सावर्ण्यम् ज्ञातव्यम्, असिरेव असिकः स्वार्थे "क"प्रत्ययः, असिकः अङ्कः = लाञ्छनं यस्य स असिकाङ्कः = खड्गलाञ्छनः श्रीश्रेयांसनाथः, ईशः = स्वामी ➔ ईशो नेता परिवृढोऽधिभूः पतीन्द्रस्वामि ← [३५८-३५९] इति हैमः, असिकाङ्कश्चासौ ईशश्च इति असिकाङ्केशः = श्रीश्रेयांसनाथस्वामीत्यर्थः, कुशकोशम् ☙ कुशाः = पापिनः ➔ कुशो रामसुते दर्भे पापिष्ठे ← [२-५३२] इत्यनेकार्थसङ्ग्रहः, कोशः = समूहः ➔ कोशोऽस्त्री कुड्मले दिव्ये शास्त्रेऽर्थौघे ← [६-५-१५] इति वैजयन्तीकोशः, कुशानां कोशः कुशकोशः = पापिसमूहस्तम् शशाक = अक्षाम्यत् ➔ शकींच् मर्षणे ← [१२८०] मर्षणं क्षमेत्यर्थः, कृतापराधानां मानवानां शिक्षामकृत्वा करुणया क्षमामेव चकार इत्याशयः ।

कीदृशः अशिकाङ्कः ? ककः ☙ कः = दक्षः कः = पार्थिवः ➔ को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे कामग्रन्थौ च चक्रिणि च पतत्रि-पार्थिवे ← [१-१] इति मेदिनी, कश्चासौ कश्च इति ककः = दक्षपार्थिवः अनन्यसामर्थ्यात्, अथवा कः = स्वर्गः ➔ कलहे को विजानीयात् प्रश्नेऽर्थेऽपि क्वचिन्मतं स्वर्गे ← [३५] इत्येकाक्षरीनाममाला कालिदासव्यासप्रणीता, कं = सुखम् ➔ कं मौलिसुखतोयेषु

*अन्वयः* ☛ ककः [दक्षपार्थिवः] अकेशः [निर्वालः] अकोशः [निष्परिग्रही] अकाशः [निरामयः] अकृशः [बलवान्] कुकः [अवनिसूर्यः] अशः [अप्रमत्तः] काशकः [दीप्तिमान्] अशोककौशिकः [शोकानुरागाभाववान्] अशिकाइकेशः [श्रीश्रेयांसनाथस्वामी] कुशकोशं [पापिसमूहं] शशाक [अक्षाम्यत्] ।

← [२२] इत्येकाक्षरनाममालिका विश्वशम्भुरचिता, कस्य कं स्याद् यस्मात् स ककः = स्वर्गसुखप्रदाता स्वर्गापवर्गदाने प्रभुत्वात् ।

पुनः कीदृशः ? अकेशः ☛ केशाः = वालाः → केशास्तीर्थवाकाश्चिकुराः कुन्तलाः कचा वालाः ← [५६७-५६८] इति हैमः, न सन्ति केशा यस्य स अकेशः = निर्वालः दीक्षासमये कायक्लेशस्वरूपलुञ्चनकारकत्वात् ।

पुनः कीदृशः ? अकोशः ☛ कोशः = राजकोशः, राज्यस्य सप्ताङ्गमध्ये एकः → स्वाम्यमात्यः सुहृत् कोशो राष्ट्रदुर्गबलानि च राज्याङ्गानि ← [७१४] इति हैमः, नास्ति कोशो यस्य स अकोशः त्यक्तराज्यत्वात् निष्परिग्रहित्वाच्च, अथवा कोशः = खड्गपिधानकम् → करकोब्दोपले कोशः शिम्बाखड्गपिधानयोः ← [१२८] इति लिङ्गानुशासनम्, नास्ति कोशो यस्य स अकोशः अजातशत्रुत्वात् त्यक्तासित्वाच्च, त्यक्ते सति असौ तत्पिधानकस्याप्यनावश्यकता एव, अथवा कोशम् = हिरण्यरजतादीनामाभूषणानि → हिरण्यकोशाऽकुप्यानि हेम्नि रूप्ये कृताकृते ← [१०४५] इति हैमः, न कोशं यस्य स अकोशः निर्मोहित्वात् निष्परिग्रहित्वाच्च ।

पुनः कीदृशः ? अकाशः ☛ काशः = रोगविशेषः → काशस्तृणे रोगभेदे ← [२-५३१] इत्यनेकार्थसङ्ग्रहः, न काशो यस्य स अकाशः = नीरोगी अशातावेदनीयानुदयात्, उपलक्षणात् सर्वरोगाभाववत्वं ज्ञेयं, परस्य रोगान् हन्त्ययं स्वस्य कथं तत्सम्भवः ? ।

पुनः कीदृशः ? अकृशः ☛ कृशः = दुर्बलः → अथ दुर्बलः कृशः ← [४४९] इति हैमः, न कृश इति अकृशः बलवानित्यर्थः, अजेयत्वात् कर्मारीन् प्रत्यपि प्रभुत्वाच्च ।

पुनः कीदृशः ? कुकः ☛ कुः = पृथ्वी → क्षितिः क्षोणी क्षमाऽनन्ता ज्या कुः ← [९३६] इति हैमः → पृथिव्यां कुः समाख्यातः ← [८] इत्येकाक्षरीकोषश्च, तस्य कः = राजा → कः...... पार्थिवे ← [१-१] इति मेदिनी, कुकः = पृथ्वीराजा

## હર્ષનિધિ

વિચક્ષણ રાજા, વાળ નથી જેને એવા, પરિગ્રહ રહિત, નિરામય, બલવાન, પૃથ્વીમાં સૂર્યસમાન, અપ્રમત્ત, દેદીપ્યમાન, શોક અને અનુરાગ નથી જેને એવા શ્રી શ્રેયાંસનાથસ્વામીએ પાપીઓનાં સમૂહને ક્ષમા આપી.

सिंहपुरीनगर्याः स्वामित्वात्, अथवा कौ = पृथिव्यां कः = अर्कः इव ➔ कोऽर्क ← [६] इत्येकाक्षरीकोषः, कुकः = अवनिसूर्यः स्वज्ञानालोकेनाज्ञानतिमिरध्वंसकत्वात् ।

पुनः कीदृशः ? अशः ☛ शः = शयनम् ➔ शयने शः समाख्यातः ← [३३] इत्येकाक्षरीकोषः, नास्ति शो यस्य स अशः अप्रमत्तत्वात्, अथवा शः = हिंसा ➔ हिंसायां शो निगद्यते ← [३३] इत्येकाक्षरीकोषः, न विद्यते शः = हिंसा यस्य स अशः अहिंसकः, अथवा न स्याद् शः = हिंसा यस्मात् स अशः, यतो जिनेभ्यः साधिकशतयोजनं यावत् हिंसा न स्याद् तदार्हन्त्यात् ।

पुनः कीदृशः ? काशकः = दीप्तिमान् ➔ काशृङ् दीप्तौ ← [८३०] णक-प्रत्ययः, स्वतनुमयूखैः अतिशयकान्तिमान् अत एव सुमनोभिः जिनमुखदर्शनाय भामण्डलं विरच्यते ।

पुनः कीदृशः ? अशोककौशिकः ☛ शोकः = खेदः उद्विग्नतेत्यर्थः ➔ शोकः शुक् शोचनं खेदः ← [९९] इति हैमः, कौशिकः = अनुरागः प्रीतिरित्यर्थः शृङ्गारविशेषो वा ➔ कौशिको नकुले घूके व्यालग्राहिणि गुग्गुलौ विश्वामित्रमुनौ शक्रे मज्जाशृङ्गारयोरपि ← [४१३-४१४] इति नानार्थोदयसागरः, शोकश्च कौशिकश्च इति शोककौशिकौ, न विद्येते शोककौशिकौ यस्य स अशोककौशिकः अर्हतो विगतरागद्वेषत्वात्, अथवा अशोकः = अशोकवृक्षः ➔ अशोकः कर्णपूरश्च सुगन्धस्ताम्रपल्लवः ← [६-२७] इत्यभिधानरत्नमाला (षड्रसनिघण्टुः), कौशिकः = शृङ्गारः उक्तपङ्क्तेः, अशोक एव कौशिको यस्य स अशोककौशिकः अष्टप्रातिहार्यसमेतत्वात् ।

इति श्रीश्रेयांसनाथजिनस्तुतिः ।

★ ★ ★

[ य - ल ]

## श्रीवासुपूज्यस्वामिस्तुतिः

लालोऽलालो लुलायीलां
लोलां ललौ लयोऽलयः ।
लं लुलोलालीलोऽलोले -
लोऽययीं ययर्यी ययौ ॥ १४ ॥

# पुण्यवल्लभा

लालोऽलालो लुलायी इति।

लुलायी ☙ लुलायः = महिषः ➔ महिषो यमवाहनः रजस्वलो वाहरिपुर्लुलायः ← [१२८१-१२८२] इति हैमः, लुलायो लाञ्छनत्वेन विद्यते यस्य स लुलायी = महिषलाञ्छनः श्रीवासुपूज्यस्वामीत्यर्थः, इला = पृथ्वी ➔ काश्यपी पर्वताधारा स्थिरेला ← [९३७] इति हैमः, तथा लोला = लक्ष्मीः ➔ लोला तु रसनाश्रियोः ← [२-४९७] इत्यनेकार्थसङ्ग्रहः, तथा लः = दानं ➔ लो दाने च प्रकीर्तितः ← [३१] इत्येकाक्षरीकोषः, इलां लोलां लं च ललौ = ददौ अर्थात् पृथ्वीलक्ष्म्यौ त्यक्तवान् अन्यदपि च दानं दत्तवानित्याशयः ➔ लांक् आदाने ← [१०६८] "दानेऽपि" इतिचन्द्रमतानुयायिनः ➔ राति लाति द्वावपि दानार्थौ ← [अदादिः - पृ.८३] इति माधवीयाधातुवृत्तिश्च, तथा च अययीं ☙ ययीः = मार्गः यायते प्राप्यते लक्ष्यं येन सः, अथवा ययीः = मोक्षमार्गः ➔ ययीस्तु पुंसि सूर्येऽपि मोक्षमार्गेऽपि कीर्तितः ← [४५४३] इति वाङ्मयार्णवः, न ययीः अययीः कुमार्ग इत्यर्थः, तं लुलोल = ममर्द ➔ लुल विमर्दने ← [पृ. ४८२९] इति वाचस्पत्यम्, मिथ्यादर्शनमतमपास्तवानित्याशयः, न केवलमनध्वानमेव निरस्तवानपितु सन्मार्गं = प्रव्रज्यामार्गमप्याश्रितवानित्याशयेनैव प्राह ययर्यीं ☙ यः = त्यागः ➔ यस्त्यागे कथितः शब्दवेदिभिः ← [२९] इत्येकाक्षरीकोषः, तस्य ययीः = मार्गः तम् ययौ = प्राप स्वीचक्र इत्यर्थः ➔ यांक् प्रापणे ← [१०६२]।

***अन्वयः*** ☛ लालः [राजसु श्रेष्ठः] अलालः [लालारहितास्यवान्] लयः [दीन - कल्पतरुः] अलयः [यत्प्रभावात् प्रलयो न स्यात्] अलीलः [अविलासी] अलोलेलः [स्थिरवाक्] लुलायी [श्रीवासुपूज्यस्वामी] इलां [पृथ्वीम्] लोलां [लक्ष्मीम्] लं [दानम्] ललौ [ददौ] अययीं [कुमार्गं] लुलोल [ममर्द] ययर्यीं [त्यागमार्गम्] ययौ [प्राप] ।

कीदृशो लुलायी ? लालः ☛ लाः = राजानः → लश्च भूपे ← [३०] इत्येकाक्षरीकोषः, आलः = श्रेष्ठः → आलं वंशपत्रं पीतनं रोमहृद् वरम् ← [३-२-१४] इति वैजयन्तीकोशः, अस्य विशेषणत्वात् पुंसि प्रयोगः, लेषु = राजसु आलः = श्रेष्ठः इति लालः = सर्वराजसु श्रेष्ठः अनन्यतमत्वात्, अथवा ला = लक्ष्मीः → ला च लक्ष्मीः ← [१०४] इत्येकाक्षरनाममालिका विश्वशम्भुरचिता, तां लाति = ददाति इति लालः = लक्ष्मीदाता मुक्तिलक्ष्मीदातृत्वात् द्रव्यलक्ष्मीदातृत्वं पूर्वमुक्तमतोऽत्र मुक्तिलक्ष्मीदातृत्वं ध्येयम्, धातुस्तु पूर्वमेव प्रोक्तः, अथवा लालः = उत्कृष्टः उत्तम इत्यर्थः → लाल उत्कृष्टचलयोर्वाच्यलिङ्गो निगद्यते ← [१०३] इत्येकाक्षरशब्दमालाऽमात्यमाधवकृता, सर्वगुणरत्नैरलङ्कृतत्वात् → उत्कृष्टः प्रशस्ते उत्तमे ← [भा.-१, पृ.-३४०] इति शब्दार्थचिन्तामणिवचनात् ।

पुनः कीदृशः ? अलालः ☛ लाला = आस्यासवः → सृणीका स्यन्दिनी लालाऽऽस्यासवः कफकूचिका ← [६३३] इति हैमः, न लाला यस्य स अलालः, यतः शैशवे वार्धक्ये च विशेषेण मुखाल्लाला पतति अयं तु सदैव युवैव, अतोऽलालः, अथवा ला = लोभः → ला लीलाविलासयोः उपालम्भे तथा लाभे लोभेऽपि ← [१०७] इत्येकाक्षरनाममालिका विश्वशम्भुनिर्मिता, लः = भयम् → लश्च भूमौ भये च ← [३०] इत्येकाक्षरीकोषः, ला च लश्च इति लालौ, न विद्येते लालौ यस्य स अलालः = लोभभयरहितः कैवल्ययुक्तत्वात् ।

पुनः कीदृशः ? लयः ☛ लः = दीनः → लो दीनेन्दुविहङ्गमे ← [१४] इति नत्वादि-एकाक्षरीनाममाला, यः = कल्पवृक्षः → यः कल्पपादपे ← [९५] इत्येकाक्षरशब्दमाला, लेषु = दीनेषु यः = कल्पतरुः इव यः स लयः, दीनाश्चात्र बाह्याभ्यन्तरसौख्येप्सुत्वेन भाव्याः सर्वैषणापूरकत्वाद् ।

पुनः कीदृशः ? अलयः ☛ लयः = प्रलयः विनाश इत्यर्थः → लयो विनाशे ← [२६-५२] इति मेदिनी, न लयो यस्मात् यस्य प्रभावाद् स अलय आर्हतातिशयात्, अथवा लयः = कश्मलं मलिनमित्यर्थः → वैचित्यं कश्मलं लयः ← [३-६-२००] इति वैजयन्तीकोषः, न लय इति अलयः = निर्मलः शोभनतमत्वात् ।

## હર્ષનિધિ

રાજાઓમાં શ્રેષ્ઠ, લાળરહિત મુખવાળા, દીન જીવોને વિશે કલ્પવૃક્ષ સમાન, જેમનાં પ્રભાવથી પ્રલય ન થાય તેવા, અવિલાસી, અચલ છે વાણી જેની એવા શ્રીવાસુપૂજ્યસ્વામીએ પૃથ્વીનું દાન કર્યું, લક્ષ્મીનું દાન કર્યું અને અન્ય પણ દાન આપ્યું. કુમાર્ગનું મર્દન કર્યું અને ત્યાગ માર્ગનો સ્વીકાર કર્યો.

पुनः कीदृशः ? अलीलः ☛ लीला = विलासः ➔ लीला केलिर्विलासश्च ← [२-४९६] इत्यनेकार्थसङ्ग्रहः, न लीला यस्य स अलीलः = अविलासी, यतः स्वभावत एव तीर्थकृत् विषयानभिष्वङ्गी = बाह्यसौख्याद् विरक्त एव, अथवा लीला = क्रीडा ➔ लीला स्याद् विलासक्रीडयोरपि ← [२-१-९३] इति नानार्थार्णवसंक्षेपः, न लीला यस्य स अलीलः अप्रमत्तत्वात्, अथवा लीः = धरा ➔ लीर्धरा ← [८४] इत्येकाक्षरनाममाला सौभरिप्रणीता, लाः = चौराः ➔ अथ लश्चौरः ← [८४] इत्येकाक्षरनाममाला सौभरिरचिता, न विद्यन्ते लियां ला यस्माद् - यस्य प्रभावात् स अलीलः समर्थशासकत्वाद् औदार्याच्च, अथवा लीला = विभ्रमः ➔ लीला तु विभ्रमे ← [१०२] इत्येकाक्षरशब्दमालाऽमात्यमाधवप्रणीता, नास्ति लीला यस्य स अलीलः = अविभ्रमः भ्रान्तिरहित इत्यर्थः सर्वज्ञत्वात् ।

पुनः कीदृशः ? अलोलेलः ☛ लोलम् = अस्थिरम् ➔ चटुलं चपलं लोलं चलं पारिप्लवास्थिरे ← [१४५५] इति हैमः, इला = वाणी ➔ इलोर्वी वाग् ← [२-४६५] इत्यनेकार्थसङ्ग्रहः, न लोलमलोलम् = स्थिरम्, अलोला इला यस्य अलोलेलः = स्थिरवाक् तीर्थकृतो वाच्यचापल्यमेव सर्वज्ञत्वात् ।

इति श्रीवासुपूज्यस्वामिस्तुतिः ।



[ क - ल ]

## श्रीविमलनाथजिनस्तुतिः

क: कोकिलकलो लोकं
कल्कोल्ललाकुलाकलूः ।
कोलाङ्कोऽकालिको लोऽलो
लुलोके कालकालकः ॥ १५ ॥

# पुण्यवल्लभा

क: कोकिलकल इति ।

कोलाङ्कः ☛ कोलः = वराहः ➔ भूदारः सूकरः कोलो वराहः ← [१२८७] इति हैमः, अङ्कः = लाञ्छनं ➔ लक्ष्म लाञ्छनम् अङ्कः ← [१०६] इति हैमः, कोलः अङ्को यस्य स कोलाङ्कः = वराहलाञ्छनः श्रीविमलनाथस्वामीत्यर्थः, लोकम् ☛ लोकः = विश्वं तम् ➔ स्याल्लोको विष्टपं विश्वम् ← [१३६५] इति हैमः, लुलोके = ददर्श ➔ लोकृङ् दर्शने ← [६१२] श्रीविमलनाथस्वामी स्वज्ञानादखिलविश्वं प्रत्यक्षीचकारेत्यर्थः, अथवा "कः कोकिलकलोऽलोकम्" इति श्लेषः कार्यः, अलोकः = लोकभिन्नप्रदेशः तम् ➔ जीवाऽजीवाधारक्षेत्रं लोकोऽलोकस्ततोऽन्यथा ← [१३६५] इति हैमः, श्रीविमलनाथस्वामी अलोकं लुलोके इत्यर्थः, यतः अलोकस्तूत्कृष्टज्ञानादेव लोक्यते न जघन्यज्ञानाद् एतेन श्रीविमलनाथस्वामिनो विशिष्टज्ञानित्वमपि व्याख्यातम् ।

कीदृशः कोलाङ्कः ? कः = राजा ➔ कः..... पार्थिवे ← [१-१] इति मेदिनी, कम्पिलपुरनगरस्य स्वामित्वात्, अथवा कः = शुद्धः कर्मकलङ्करहितत्वात् ➔ को विजानीयात् प्रश्नेऽर्थेऽपि क्वचिन्मतम् स्वर्गे चक्रे तथा मित्रे शुद्धे ← [३५] इत्येकाक्षरीनाममाला कालिदासव्यासरचिता ।

पुनः कीदृशः ? कोकिलकलः ☛ कोकिलः = कृष्णः पिक इत्यर्थः ➔ कोकिलः परपुष्टश्च कृष्णः परभृतोऽसितः ← [६-४२७] इति धन्वन्तरिनिघण्टुः, कलः = मधुरो ध्वनिः ➔ मधुरः कलः ← [१४०९] इति हैमः, कोकिल इव कलः यस्य स कोकिलकलः = मधुरध्वनिरित्याशयः मधुरध्वनिना देशनादायकत्वात् सुस्वरनामकर्मोदयाच्च ।

***अन्वयः*** ☛ कः [राजा] कोकिलकलः [पीकवन्मधुरध्वनिः] कल्कोल्ललाकुलाकलूः [पापि-रोगि-व्याकुलानां पापानामुच्छेदकः] अकालिकः [कालिमा - विरहितः] लः [देदीप्यमानः] अलः [निर्भयः] कालकालकः [यममारकः] कोलाङ्कः [श्रीविमलनाथस्वामी] लोकं [विश्वं] लुलोके [ददर्श]।

पुनः कीदृशः ? कल्कोल्ललाकुलाकलूः ☛ कल्काः = पापिनः → कल्कोऽघविष्ठयोर्दम्भे पापिनि ← [२-२/३] इत्यनेकार्थसङ्ग्रहः, उल्ललाः = अतिशयरोगिनः, → उल्ललो बहुरोगयुक्ते ← [भा.-२, पृ.-१३७२] इति वाचस्पत्यम्, आकुलाः = व्याकुलाः → आकुलम् व्याकुलम् ← [पृ.-१४६] इति हलायुधः, अत्र आकुल अकुलो वा द्वावपि शब्दौ स्वीक्रियेते → अकुलोऽप्याकुलः ख्यातः ← [४१] इति द्विरूपकोषवचनात्, कल्काश्च उल्ललाश्च आकुलाश्च इति कल्कोल्ललाकुलाः, अकानि = पापानि, न कं = सुखं स्याद् यस्मात् तद् दुःखम् → अकं दुःखाघयोः ← [२-१] इत्यनेकार्थसङ्ग्रहः, तानि, कल्कोल्ललाकुलानाम् अकानि कल्कोल्लला - कुलाकानि, तानि लुनाति = छिनत्ति इति → लूग्श् छेदने ← [१५१९] कल्कोल्ललाकुलाकलूः = पापिरोगिव्याकुलानां दुःखानां पापानां वोच्छेदकः ।

पुनः कीदृशः ? अकालिकः ☛ कालिका = वैवर्ण्यम् → वैवर्ण्यम् कालिका ← [३०७] इति हैमः, न कालिका यस्य स अकालिकः = कालिमारहितः निष्कषायत्वात् ।

पुनः कीदृशः ? लः = दीप्तः → लो दीप्तः ← [३०] इत्येकाक्षरीकोषः, स्वतनुमयूखैर्देदीप्यमान इत्यर्थः ।

पुनः कीदृशः ? अलः ☛ लः = राजा भयम् वा → लश्च भूपे भये च ← [३०] इत्येकाक्षरीकोषः, न लः = भूपो भयं वा यस्य स अलः = राजराजः निर्भयो वा, अथवा न लः = भयं यस्मात् स अलः अभयदायकत्वाद्, अथवा लः = प्रलयः → लः श्लेषे चाशये चैव प्रलये साधनेऽपि लः ← [३१] इत्येकाक्षरीकोषः, न लः = प्रलयः यस्माद् यस्य प्रभावात् स अलः = प्रलयनिवारकः तदतिशयविशेषाद्, अथवा "अलोलः" इत्येकमेव विशेषणम्, लोलः = चञ्चलः → लोलश्चले सतृष्णे च ← [२-४९७] इत्यनेकार्थसङ्ग्रहः, न लोलं इति अलोलः = निश्चलः स्थिरत्वात्, अथवा लोलः = लिप्सुः → लिप्सौ लालसलम्पटौ लोलः ← [१०४] इति शेषनाममाला, न लोलः अलोलः = अलिप्सुः लालसाशून्यत्वाद्, अथवा अवग्रहरहितोऽयं प्रयोगः,

## હર્ષનિધિ

રાજા, કોયલની જેમ મધુરધ્વનિવાળા, પાપી - રોગી અને વ્યાકુળ વ્યક્તિઓનાં પાપનો ઉચ્છેદ કરનારા, કાલિમારહિત, દેદીપ્યમાન, નિર્ભય, યમને હણનારા શ્રીવિમલનાથ સ્વામીએ લોકનું અથવા અલોકનું આલોકન કર્યું.

लोलः ☛ ला = लक्ष्मीः दानं वा → ला च लक्ष्मीः ← [१०४] → ला दाने ← [१०६] इत्येकाक्षरनाममालिका विश्वशम्भुप्रणीता, तथा उः = मोक्षः → उश्च शम्भौ मोक्षोद्धवशक्तिषु ← [६] इत्येकाक्षरीयप्रथमकाण्डः परमानन्दनन्दनविरचितः, तौ लाति = ददाति इति लोलः = लक्ष्मीमोक्षदायकः भक्तेभ्यो यथायोग्यं ददातीत्याशयः।

पुनः कीदृशः ? कालकालकः ☛ कालः = यमराजः → यमः कृतान्तः..... समवर्तिकालौ ← [१८४] इति हैमः, कालः = मृत्युः → मृतिः संस्था मृत्युकालौ ← [३२३] इति हैमः, कालस्य = यमस्य कालः = मृत्युः यस्मात् स कालकालः = यममारकः, स्वार्थिक-"क"प्रत्ययश्च कालकालकः।

इति श्रीविमलनाथजिनस्तुतिः।

★ ★ ★

[ त - न ]

## श्रीअनन्तनाथजिनस्तुतिः

नेताऽनन्तोऽनन्तानानू -
नूतानुतानूतानिति ।
ततौनन्नूतनो ननू -
न्नतानतोऽतनुतनुः ॥ १६ ॥

# पुण्यवल्लभा

नेताऽनन्त इति ।

अनन्तः = श्रीअनन्तनाथस्वामी आनून् ☛ आनवः = प्राणिनः तान् आनून् → आनुः प्राणिनि ← [भा.-१, पृ.-७३०] इति वाचस्पत्यम्, कियन्तस्ते ? अनन्ताः तान् अनन्तान्, कीदृशास्ते ? ऊताः = रक्षिता आश्रिता इत्यर्थः तान् ऊतान् → ऊतगोपायितत्रातत्राणगुप्तास्तु रक्षिते ← [५-४-१००] इति वैजयन्तीकोषः, उत वितर्के → आहो उताहो किमुत वितर्के किं किमूत च ← [१५३६] इति हैमः, न ऊता अनूताः तान् अनूतान् सर्वान् औनत् = अक्लिद्यत् आर्द्रीचकारेत्यर्थः → उन्दैप् क्लेदने ← [१४९१] स्ववाचा इति शेषः, यतस्तीर्थकरः शरणागतान् उत शरणानागतान् इति न पश्यति किन्तु कृपालुतया आनून् उद्धरत्येव तस्य वीतरागत्वात् । इति समाप्तौ → इति हेतुप्रकरणावधारणसमाप्तिषु ← [५५] इत्यव्ययकोशः, ननु अवधारणे → नन्वाक्षेपे परिप्रश्ने प्रत्युक्तावववधारणे ← [७-३१] इत्यनेकार्थसङ्ग्रहः ।

कीदृशः अनन्तनाथः ? नेता = अधिपः → अधिपस्त्वीशो नेता ← [३५८] इति हैमः, चतुर्धासङ्घस्य ईशत्वात् ।

पुनः कीदृशः ? तता ☛ तं = पुण्यं, तारयति सर्वान् तत् → तश्चौरामृतपुच्छेषु... तरणे पुण्ये कथितः ← [१६-१] इति मेदिनी, तनोति = विस्तृणोतीति क्विप् → तनूयी विस्तारे ← [१४९९] "ततन्" प्रथमैकवचने तता = पुण्यविस्तारकः ।

पुनः कीदृशः ? नूतनः ☛ नूताः = स्तुताः → णूत् स्तवने ← [१४२९] नाः

*अन्वयः* ☛ नेता [नायकः] तता [पुण्यविस्तारकः] नूतनः [स्तुतनायकः] उन्नतानतः [स्वभावत उत्तमस्तथापि नम्रः] अतनुतनुः [अकृशशरीरः] अनन्तः [श्रीअनन्तनाथः] ऊतान् [रक्षितान्] उत अनूतान् [अरक्षितान्] अनन्तान् आनून् [जीवान्] ननु [निश्चयेन] औनत् [आर्द्रीचकार] इति ।

## હર્ષનિધિ

નાયક, પુણ્યનો વિસ્તાર કરનારા, જેની નાયકોએ સ્તુતિ કરી છે એવા, સ્વભાવથી ઉત્તમ તો પણ નમ્ર, અકૃશશરીરી એવાશ્રી અનંતનાથભગવાને આશ્રિત અને અનાશ્રિત એવા અનન્ત જીવોને અવશ્ય ભીના કર્યા (વિરક્ત કર્યા).

= नेतारः ➔ नेता नश्च समाख्यातः ← [२२] इत्येकाक्षरीकोषः, नूता ना यं स नूतनः = स्तुतनायकः धर्मचक्रित्वात्, अथवा नः = सूर्यः ➔ तरणौ नः प्रकीर्तितः ← [२२] इत्येकाक्षरीकोषः, नूतः = स्तुतः नः = सूर्यः यं स नूतनः स्तुतसूर्यः, अथवा नूतनः = नवीनः ➔ नवीनं सद्यस्कं प्रत्यग्रं नूत्न-नूतने ← [१४४८] इति हैमः, "नूतन"शब्दस्य विशेषणत्वेन "नेता" प्रयोगेऽन्वयः कार्यः, यतः नूतनो नेता जिनशासनस्य तदा इत्याशयः।

पुनः कीदृशः ? उन्नतानतः = स्वभावत उत्तमस्तथापि नम्रः ➔ बन्धुरं तून्नतानतम् ← [१४६८] इति हैमः, स्वोत्तमगुणैरलङ्कृतोऽपि नम्रतया नतः।

पुनः कीदृशः ? अतनुतनुः ☞ तनुः = दुर्बलः ➔ दुर्बलः कृशः क्षामः क्षीणस्तनुः ← [४४९] इति हैमः, तनुः = देहः ➔ क्षेत्रगात्र-तनुभूधनाः ← [५६३] इति हैमः, न तनुः अतनुः = अकृशः, अतनुस्तनुर्यस्य स अतनुतनुः = अकृशशरीरः, भीष्मोपसर्गसहने प्रभुत्वात्।

इति श्रीअनन्तनाथजिनस्तुतिः।

★ ★ ★

[ द - भ ]

## श्रीधर्मनाथजिनस्तुतिः

भूभृद्भद्राभ ! दाऽदभ्रा -
भद्रदभिद्र ! भेदभिद् ।
भभ ! भिदुभृदाभाद् भो
भाभिर्दं भद्रभूर्ददे ॥ १७ ॥

# पुण्यवल्लभा

भूभृद्भद्राभ ! इति ।

भो भिदुभृद् ! ☛ भिदुः = वज्रं ➔ वज्रं... दम्भोलिर्भिदुरं भिदुः ← [१८०] इति हैमः, तं बिभर्ति = धरति लक्ष्मत्वेन यः स ➔ डुडुभृंग्क् पोषणे धारणे च ← [११४०] भिदुभृद् = वज्रधरः श्रीधर्मनाथस्वामीत्यर्थः, तस्य सम्बोधने हे भिदुभृद् ! भवान् भाभिः = प्रभाभिः ➔ भाः प्रभा वसु ← [१००] इति हैमः, "भास्"सकारान्तोऽयम् शब्दः लोपश्चान्त्यस्य "अवर्ण..." १-३-२२ इति सूत्रेण, कान्तिभिरित्यर्थः, अथवा भा = मयूखः अंशुरित्यर्थः ➔ भा मयूखमहसी ← [१००] इति हैमः, ताभिः भाभिः आभाद् = प्रचकाशे दिदीप इत्यर्थः ➔ भांक् दीप्तौ ← [१०६१] दं = दानं ➔ द..... छेदे दाने च दातरि ← [२०] इत्येकाक्षरीकोषः, ददे = दत्तवान् ➔ डुदांग्क् दाने ← [११३८] दानञ्चात्र द्वेधा, गृहस्थावस्थायामर्थिभ्यो हिरण्यादीनां, विरतिधरावस्थायाञ्च मुमुक्षुभ्यो व्रतादीनामिति, भोः सम्बोधने ➔ भोः प्याट् पाट् अङ्ग है हे स्युः सम्बोधनस्य द्योतकाः ← [३-४-१२] इति शिवकोषः ।

कीदृश भिदुभृद् ? भूभृद्भद्र ☛ भूभृद् = राजा ➔ राजा राट् पृथिवी - शक्रमध्यलोकेशभूभृतः ← [६८९] इति हैमः, भूः = भूमिः ➔ भूर्भूमिर्भीर्भयम् ← [२७] इत्येकाक्षरीकोषः, तां बिभर्ति अर्थादिना इति व्युत्पत्तेश्च, तेषु भूभृत्सु भद्रः = श्रेष्ठः स्तुत्यो वा यः स भूभृद्भद्रः = राजोत्तमः ➔ भद्रः श्रेष्ठे भन्दनीये स्तुत्ये साधौ ← [भा.-३, पृ.-४०८] इति शब्दार्थचिन्तामणिः, अथवा भूभृतां = पार्थिवानाम्

*अन्वयः* ☛ भूभृद्भद्र ! [राजश्रेष्ठ] अभ ! [अप्रमत्त] द ! [दातः] अदभ्राभद्रदभिद्र ! [प्रचुरदुःखपर्वतदम्भोले !] भेदभिद् [भेदभावनिवारक] भभ ! [नक्षत्रकान्ते !] भद्रभूः ! [मङ्गलकारिन्] भो भिदुभृद् [हे धर्मनाथस्वामिन् !] (भवान्) भाभिः [प्रभाभिः] आभाद् [प्रचकाशे] दं [दानं] ददे [दत्तवान्] ।

गिरीणां वा भद्रं = क्षेमं स्याद् यस्मात् स → भूभृन्महीधरे पृथ्वीपतौ ← [२-१८१] इत्यनेकार्थसङ्ग्रहः, → क्षेमे मद्रं भद्रभन्द्रे ← [१-१५] इति शब्दरत्नाकरः, भूभृद्भद्रः = राज्ञां पर्वतानां वा कल्याणकारीत्यर्थः, पर्वतानामित्युपलक्षणात् सर्वप्रकृतीनामिति ध्येयम् तत्सम्बोधने ।

पुनः कीदृश ? अभ ☛ भः = निद्रा → भो विश्वमूर्तिर्द्विरण्डेशो निद्रा ← [४२] इत्येकाक्षरीमातृकाकोषः, नास्ति भो यस्य स अभः = अप्रमत्तः दर्शनावरणीयकर्मरहितत्वात्, अथवा भः = भ्रान्तिः → भस्तु भ्रान्तौ ← [३९२८] इति वाङ्मयार्णवः, नास्ति भो यस्य स अभः = भ्रान्तिरहितः कैवल्योपलब्धेः, अथवा न भो यस्माद् स अभः सत्यप्ररुपकत्वात्, अथवा भः = भवनं → भवने भः प्रकीर्तितः ← [२६] इत्येकाक्षरीकोषः, नास्ति भो यस्य स अभः अनगारित्वात् तत्सम्बोधने अभ ! ।

पुनः कीदृश ? द ☛ दः = दाता → दकारोऽभ्रे कलत्रे च छेदे दाने च दातरि ← [२०] इत्येकाक्षरीकोषः, निर्ममत्वात् परमकृपालुत्वाच्च तत्सम्बोधने हे द ! ।

पुनः कीदृश ? अदभ्राभद्रदभिद्र ☛ अदभ्रं = प्रचुरं → पुष्कलं बहुलं बहुः अदभ्रम् ← [९०/९१] इति लघुनाममाला, अभद्रं ☛ भद्रं = कल्याणं → कल्याणं..... मङ्गलभद्रमद्र ← [८६] इति हैमः, न भद्रमभद्रम् = अमङ्गलम्, अदभ्रञ्च तद् अभद्रञ्च इति अदभ्राभद्रं = भूयिष्ठदुःखं, तदेव दः = पर्वतः इति अदभ्राभद्रदः → दः पुमानचले ← [२५६३] इति वाङ्मयार्णवः, अचलः = पर्वतः → अचलस्तु गिरिकीलयोः ← [३-६१७] इत्यनेकार्थसङ्ग्रहः, तस्य भेदने भिद्रः = वज्रम् इव → वज्रं भिदुः भिदिरं भिदिः भिदकं भिद्रः ← [पृ.-४९६] इति हलायुधः, अदभ्राभद्रदभिद्रः = प्रचुरदुःखपर्वतदम्भोलिः, दयालुत्वात् बलीयस्त्वाच्च, तत्सम्बुद्धौ ।

पुनः कीदृश ? भेदभिद् ☛ भेदः = भेदभावः, यत्रायं तत्रात्मीयताऽभावः → विश्लेषे दारणे भेदः ← [६-१-४२] इति वैजयन्तीकोषः, जिनस्तु सर्वं प्रति समान एव, अपरस्यापि मनःस्थं भेदभावं भिनत्ति = दूरीकरोति अतो भेदभिद्,

## હર્ષનિધિ

રાજાઓમાં શ્રેષ્ઠ, અપ્રમત્ત, દાની, પ્રચુરદુ:ખરૂપી પર્વતનાં નાશ કરવામાં વજ્રસમાન, ભેદનું નિવારણ કરનારા, નક્ષત્ર સમાન કાન્તિવાળા, મંગલકારી હે ધર્મનાથસ્વામી ! આપ પ્રભા વડે દેદીપ્યમાન થયા અને દાન આપ્યું.

अथवा भेदः = सामाद्युपायमध्ये एकः, तं भिनत्तीति भेदभिद्, यतः कैवल्योपलब्धेर-नन्तरं न कोऽपि केवली गच्छादीनां व्यवस्थां करोति विगतरागद्वेषत्वात् तत्सम्बोधने भेदभिद् ।

पुनः कीदृश ? भभ ☛ भं = नक्षत्रं → नक्षत्रं तारका ताराज्योतिषी भम् ← [१०७] इति हैमः, भा = दीप्तिः → दीप्तिर्भा स्याद् ← [२७] इत्येकाक्षरीकोषः, भमिव भा यस्य स भभः = नक्षत्रसमकान्तिः प्रकाशमानत्वात् तत्सम्बुद्धौ भभ ।

पुनः कीदृश ? भद्रभूः ☛ भद्रं = मङ्गलम् → भद्रं तु मङ्गले ← [२-४३१] इत्यनेकार्थसङ्ग्रहः, भद्रं भवति यस्मात् स भद्रभूः = मङ्गलकारी, व्याख्यातं चानेन यत् सौख्यमेवास्माद् भवति नान्यत् किमपीति, तत्सम्बोधने ।

इति श्रीधर्मनाथजिनस्तुतिः ।



[ च - र ]

## श्रीशान्तिनाथजिनस्तुतिः

रुरुचे चारुचीरोऽरु
रचिच्चोरचुराचरः ।
चरुचिराचिरोऽचौर -
चारारिररुची रुचा ॥ १८ ॥

# पुण्यवल्लभा

रुरुचे चारुचीर इति ।

आचिरः ☛ अचिरानाम्न्या राज्ञ्या अपत्यं पुमान् आचिरः = अचिरानन्दनः श्रीशान्तिनाथस्वामीत्यर्थः, रुचा ☛ रुक् = दीधितिः ➔ दीधिति-कर-द्युति-द्युतो-रुग् ← [१००] इति हैमः, तेन रुचा = स्वदेहकिरणेन रुरुचे = दिदीपे ➔ रुचि अभिप्रीत्यां दीप्तौ च ← [९३८] अथवा रुचा = भामण्डलदीप्तिना रुरुचे इत्यर्थः ।

कीदृश आचिरः ? चारुचीरः ☛ चारु = मनोहरम् ➔ चारु हारि रुचिरं मनोहरम् ← [१४४४] इति हैमः, चीरं = वस्त्रम् ➔ अम्बरं सिचयो वसनं चीराच्छादौ ← [६६६] इति हैमः, चारु चीरं यस्य स चारुचीरः देवदुष्यस्य दिव्यत्वेन चारुत्वात्, व्याख्यातं चानेन जिनस्य साम्बरत्वमेव न तु दिगम्बरत्वमिति, अथवा चारु = शोभनम् ➔ शोभनं सुषमं चारु ← [५-४-१३५] इति वैजयन्तीकोशः, चिः = बुद्धिः ➔ चिः स्त्रियां बुद्धौ ज्ञाने ← [३१] इत्येकाक्षरनाममालिका विश्वशम्भुविरचिता, इरा = वाक् ➔ इराम्भोवाक् ← [२-३८५] इत्यनेकार्थसङ्ग्रहः, चिश्च इरा च इति चीरे = बुद्धिवचने, चारु चीरे यस्य स चारुचीरः = शोभनबुद्धिवाक् विद्वन्मूर्धन्यत्वात्, अतिशयसमेतत्वात् ।

पुनः कीदृशः ? अरुः ☛ रुः = भयम् ➔ रुर्भये च प्रकीर्तितः ← [३०] इत्येकाक्षरीकोषः, नास्ति रुर्यस्य यस्माद् वा स अरुः = निर्भयोऽभयप्रदो वा, अथवा रु = इच्छा ➔ रु जालेच्छयोः ← [११९] इत्येकाक्षरीनाममाला

*अन्वयः* ☛ चारुचीरः [मनोहराम्बरः] अरुः [निरीहः] अचिच्चोरचुराचरः [अज्ञानि - चोरचौर्यगुप्तचरः] चरुचिः [चन्द्ररुचिः] अचौरचारारिः [चौरगुप्तचर - रिप्वभाववान्] अरुचिः [निःस्पृही] आचिरः [श्रीशान्तिनाथस्वामी] रुचा [दीधितिना] रुरुचे [दिदीपे]।

कालिदासव्यासकृता, न विद्यते रु यस्य स अरुः = निरीहः मोहनीयकर्मशून्यत्वाद्, अथवा रुः = शत्रुः ➔ रुरौ शब्दौ पुमांसौ द्वौ शत्रुशब्दार्थवाचकौ ← [१०३] इत्येकाक्षरनाममालिका विश्वशम्भुरचिता, न विद्यते रुर्यस्य स अरुः = अशत्रुः निष्कषायत्वात् केवलित्वाच्च, शत्रुत्वेनात्र राग-द्वेषादय एव ध्येयाः, बाह्यशत्रूणाम - भावस्तु पश्चात् कथयिष्यते।

पुनः कीदृशः ? अचिच्चोरचुराचरः ☛ चित् = प्रज्ञा बुद्धिरित्यर्थः ➔ प्रज्ञा-प्रेक्षा-चित् ← [३०९] इति हैमः, अथवा चित् = ज्ञानं ➔ चिज्ज्ञप्तिर्ज्ञानं च बोधनम् ← [३-६-१६४] इति वैजयन्तीकोषः, नास्ति चिद् यस्य स अचिद् = निर्बुद्धिरज्ञानी वा मिथ्यादृष्टिरित्यर्थः, स एव चोरः = स्तेनः ➔ चोरस्तु प्रतिरोधकः दस्युः पाटच्चरः स्तेनः ← [३८१] इति हैमः, तस्य चुरा = चौर्यम् ➔ चुरा चौरी च चौर्यम् ← [पृ.२०७-५२] इति कल्पद्रुकोषः, ➔ चुरण् स्तेये ← [१५६८] "भिदादयः" ५-३-१०८ इत्यनेन "अङ्"प्रत्ययः, स्त्रीत्वाच्च "आप्", तत्प्रकटीकरणे चरः = गुप्तचरः इव ➔ अवसर्पो मन्त्रवित् चरः ← [७३३] इति हैमः, अचिच्चोरचुराचरः = अज्ञानिचोरचौर्यगुप्तचरः, यतोऽर्हतां ज्ञाननिरूपणादेव अज्ञानिनोऽज्ञानता स्फुटा भवतीत्याशयः, गुप्तचरस्तु प्रच्छन्नतया अयन्तु साक्षात्तया स्वकार्यं कुरुते इति भेदविशेषश्च।

पुनः कीदृशः ? चरुचिः ☛ चः = चन्द्रमा भास्करो वा ➔ चश्चन्द्रमाः समाख्यातो भास्करे तस्करे मतः ← [१२] इत्येकाक्षरीकोषः, रुचयः = अंशवः ➔ रुचिशोचिरंशु ← [९९] इति हैमः, च इव रुचयो यस्य स चरुचिः = चन्द्ररुचिः सूर्यकान्तिर्वा शशिवत् शैत्यप्रतीतिकारकत्वात्, अर्कवदज्ञानतिमिरध्वंसकत्वात्।

पुनः कीदृशः ? अचौरचारारिः ☛ चौरः = तस्करः ➔ चौरो दस्युसुगन्धयोः ← [२-४१०] इत्यनेकार्थसङ्ग्रहः, चारः = गुप्तचरः ➔ वार्त्तायनः स्पशश्चारः ← [७३४] इति हैमः, अरिः = शत्रुः ➔ शत्रौ... प्रत्यनीकोऽभियात्यरी ← [७२८] इति हैमः, चौरश्च चारश्च अरिश्च इति चौरचारारयः, न विद्यन्ते चौरचारारयो यस्य स

## હર્ષનિધિ

સુંદરવસ્ત્રધારી (દેવદુષ્યધારી), ઇચ્છારહિત, અજ્ઞાની ચોરની ચોરીને વિશે ગુપ્તચર, ચન્દ્રસમાન કાન્તિવાળા, ચોર - ગુપ્તચર અને શત્રુ નથી જેને એવા, નિઃસ્પૃહી શ્રીશાન્તિનાથસ્વામી કાન્તિથી દેદીપ્યમાન થયા.

अचौरचारारिः, यतः तत्प्रभावात् न कस्यापि मनश्चौर्यार्थं प्रयुङ्क्ते अतश्चौराभावः, चौराभावे गुप्तचरस्य कावश्यकता ? अतश्चाराभावः, अरेरप्यभाव एव तस्य बलीयस्त्वात्, एतेन जिनस्य चक्रित्वमपि व्याख्यातम् षट्खण्डनायकत्वात् षट्खण्डमध्येऽ - रेरविद्यमानत्वाद् ।

पुनः कीदृशः ? अरुचिः ☛ रुचिः = स्पृहाऽभिष्वङ्गो वा → रुचिर्द्युतौ स्पृहाभिष्वङ्गशोभासु ← [२-५७/५८] इत्यनेकार्थसङ्ग्रहः, न रुचिर्यस्य स अरुचिः निःस्पृहित्वाद्, अनभिष्वङ्गित्वात् ।

इति श्रीशान्तिनाथजिनस्तुतिः ।

★ ★ ★

[ ज - र ]

## श्रीकुन्थुनाथजिनस्तुतिः

राजाजी राजराजं जो
जजारर्जुरजोऽरजाः ।
रज्जुराजिरजीरोऽरं
राजजोऽरीजजोऽजरः ॥ १९ ॥

राजाजी राज इति।

अजी ☛ अजः = छागः ➔ अजः स्यात् छगलश्छागः ← [१२७५] इति हैमः, अजो लक्ष्मत्वेन वर्तते यस्य स अजी = छगलाञ्छनः श्रीकुन्थुनाथस्वामीत्यर्थः, अरं = शीघ्रतया ➔ अरमव्ययं क्षिप्रं द्रुतं सत्वरं च ← [पृ.-३८१-१६] इति कल्पद्रुकोशः, राजराजम् ☛ राज्ञामपि राजा "राजन्सखेः" ७-३-१०६ इत्यनेन 'अत्'समासान्तः, राजराजस्तम् राजराजम्, जजार = तिरश्चकार ➔ जॄ न्यक्कारे ← [पृ.-४८७] इति शब्दस्तोममहानिधिः, अथवा राजराजः = कुबेरः तम् स्वस्वेन (अर्थेन) जजार ➔ राजराजः नृपेशेन्द्वोः कुबेरे ← [४-५७] इत्यनेकार्थसङ्ग्रहः।

कीदृशः अजी ? राजा = नृपः प्रभुर्वा ➔ राजा नृपः प्रभू राजा ← [२६८] इति शाश्वतकोशः, षट्खण्डस्याधिपतित्वात्, ननु "राजराजं जजार" इति पूर्वोक्त - विशेषणेनैव जिनस्य राजत्वं व्याख्यातं किं व्यर्थेनैतद्विशेषणेन इति चेत्... न "राजन्" शब्दस्य क्षत्रियार्थेपि विद्यमानत्वात् तद् यथा ➔ क्षत्रं तु क्षत्रियो राजा ← [८६३] इति हैमः, एतेन तीर्थकृतः क्षत्रियकुले एवोत्पत्तिरिति व्याख्यातम्।

पुनः कीदृशः ? जः = जेता जयकारक इत्यर्थः ➔ जेता जश्च प्रकथितः सूरिभिः शब्दशासने ← [१४] इत्येकाक्षरीकोषः, बाह्यशत्रून् जयति इति तु पूर्वमुक्तमत्र आभ्यन्तररिपुजेता इत्याशयः।

पुनः कीदृशः ? ऋजुः = अतिशयगुणवान्, अर्जयति गुणान् यः सः ➔

*अन्वयः* ☙ राजा [नृपः] जः [जेता] ऋजुः [अतिशयगुणवान्] अजः [संसारसमुद्रात् तारकः] अरजाः [निर्मलः] रज्जुराजिः [गुणपङ्क्तिः] अजीरः [निःशस्त्रः] राजजः [चन्द्रजित्] अरीजजः [भ्रान्तिमत्सरजन्मरहितः] अजरः [अवृद्धः] अजी [श्रीकुन्थुनाथस्वामी] राजराजम् अरं [शीघ्रम्] जजार [तिरश्चकार] ।

प्रगुणोऽप्यृजुः ← [५-४-१२४] इति वैजयन्तीकोषः, अथवा ऋजुः = सरलस्वभावी निर्दम्भित्वात् → ऋजुस्तु प्राञ्जलोऽञ्जसः ← [३७५] इति हैमः।

पुनः कीदृशः ? अजः ☛ जः = जन्म → जनने जेतरि जः स्याद् ← [२१] इति सुशीलनाममाला-एकाक्षरकोशः, नास्ति जः = जन्म यस्मात् स अजः = संसारसमुद्रात् तारक इति भावः।

पुनः कीदृशः ? अरजाः ☛ अरजाः = निर्मलः कर्ममालिन्यस्य शून्यत्वात् → अरजा निर्मलः ← [भा.-१, पृ.-९३] इति शब्दकल्पद्रुमः, अथवा रजः = रजोगुणः न रजो यस्य स अरजा रजोगुणाभाववानित्यर्थः → अरजाः ...रजोगुणरहिते ← [भा.-१, पृ.-१६२] इति शब्दार्थचिन्तामणिः → अरजः... त्रिषु रजोगुणकार्यकाम - क्रोधादिशून्ये ← [भा.-१, पृ.-३४९] इति वाचस्पत्यञ्च।

पुनः कीदृशः ? रज्जुराजिः ☛ रज्जवः = गुणाः → रज्जुर्वेण्यां गुणे ← [८-१४] इति मेदिनी, राजिः = पङ्क्तिः → राजी रेखायां पङ्क्तौ च ← [२-७३] इत्यनेकार्थसङ्ग्रहः, रज्जूनां = गुणानां राजिः = पङ्क्तिः यस्मिन् स रज्जुराजिः = गुणपङ्क्तिः अनन्तगुणैरलङ्कृतत्वात्।

पुनः कीदृशः ? अजीरः ☛ जीरः = असिः खड्ग इत्यर्थः → जीरस्त्वजाज्यां खड्गे च ← [२-४१२] इत्यनेकार्थसङ्ग्रहः, नास्ति जीरो यस्य स अजीरः = अखड्गः असित्यक्तृत्वात्, असेरुपलक्षणादत्र सर्वशस्त्रत्यक्तृत्वं ज्ञेयम्।

पुनः कीदृशः ? राजजः ☛ राजा = चन्द्रः → राजा निशो रत्नकरौ च चन्द्रः ← [१०५] इति हैमः, तस्य जः = जेता राजजः = चन्द्रजित् उद्योतस्याधिक्यात्।

पुनः कीदृशः ? अरीजजः ☛ री = भ्रान्तिः → भये शब्दे च री भ्रान्तौ ← [३८] इत्येकाक्षरनाममाला सुधाकलशमुनिविरचिता, जः = मत्सरः → जो जवे विषमे मेरौ स्वर्गे पातरि मत्सरे ← [५८] इत्येकाक्षरीनाममाला कालिदासव्यासकृता, जः = जननं जन्मेत्यर्थः → जः स्याज्जननजैनयोः ← [५०] इत्येकाक्षरशब्दमालाऽमात्य

# હર્ષનિધિ

રાજા, શત્રુને જીતનારા, અતિશય ગુણવાન, સંસાર સમુદ્રથી તારનારા, નિર્મળ, ગુણોની શ્રેણીને ધારણ કરનારા, શસ્ત્રનો ત્યાગ કરનારા, સ્વકાન્તિથી ચંદ્રને જીતનારા, ભ્રાન્તિ માત્સર્ય અને જન્મ રહિત, વાર્ધક્ય નથી જેને એવા શ્રીકુંથુનાથસ્વામીએ રાજાઓનાં રાજાનો શીઘ્રતયા તિરસ્કાર કર્યો.

माधवनिर्मिता, री च जश्च जश्च इति रीजजाः, न सन्ति रीजजा यस्य स अरीजजः = भ्रान्तिमत्सरजन्मरहितः सर्वज्ञत्वाद्, अद्वेषित्वाद्, अन्त्यभवित्वात् ।

पुनः कीदृशः ? अजरः ☛ जरा = वार्धक्यम् ➔ वार्धिकं स्थाविरं क्लीबे स्त्रीलिङ्गे विस्रसा जरा ← [३-५] इति लिङ्गनिर्णयः, न विद्यते जरा यस्य स अजरः, यतस्तीर्थकृतः सदा युवावस्थैव, अथवा जरः = विनाशः ➔ जरः विनाशने ← [३०५७] इति वाचस्पत्यम्, न स्याद् जरः यस्मात् स अजरः, यतः जिनस्य प्रभावात् सर्वेषामभ्युदय एव अथ विनाशस्य का कथा ? ।

इति श्रीकुन्थुनाथजिनस्तुतिः ।

★★★

[ ह - र ]

## श्रीअरनाथजिनस्तुतिः

हारहूराहारहूर -
राहोऽरिहरहीर ! हि ।
हरह ! रां हरे ! राहि
हारारिह ! हरार ! हे ॥ २० ॥

# पुण्यवल्लभा

हारहूरा इति ।

हे अर ! ☛ अरः = श्रीअरनाथजिनः तस्य सम्बुद्धौ हे अर ! त्वं राम् ☛ रा = रमा लक्ष्मीरित्यर्थः ➔ रा रमा रमणी बाला ← [१०१] इत्येकाक्षरनाममालिका विश्वशम्भुप्रणीता, ताम्, लक्ष्मीश्चात्र सिद्धित्वेन ध्येया, राहि = प्रयच्छ ➔ रांक् दाने ← [१०६९], यतः प्रभोः हस्ततः गृहीतदानो भव्य एव भवति, हे सम्बोधने ➔ हे च सम्बोधनेऽपि च ← [पृ.-२९७, पं.-२४] इति शब्दरत्नावली ।

कीदृश अर ! ? हारहूराहारहूरराहो ! ☛ हारहूरा = द्राक्षा ➔ द्राक्षा तु गोस्तनी मृद्वीका हारहूरा च ← [११५५/११५६] इति हैमः, हारहूरम् = मदिरा ➔ शुण्डा हाला हारहूरम् ← [९०३] इति हैमः, हारहूराया हारहूरम् हारहूराहारहूरं = द्राक्षामदिरा, राहुः = त्यागः ➔ रह त्यागे ← [५५४] "कृ-वा-पा-जि..... जा निरहीण्भ्य उण्" [१] इत्युणादिसूत्रेण "उण्"प्रत्ययः, हारहूराहारहूरस्य राहुर्यस्य स तस्य सम्बोधने, हारहूराहारहूरराहो ! = हे द्राक्षामदिरात्यक्तः !, मदिरोपलक्षणात् सप्तव्यसनानि त्यक्तवानिति भाव्यम्, यतः प्रायेण राजपुत्रो व्यसनी भवत्येव ।

पुनः कीदृश ! ? अरिहरहीर ! ☛ अरिः = रिपुः ➔ अरिर्द्विषन् प्रत्यर्थी रिपुः ← [पृ.-२०, पं.-१६] इति हैमलिङ्गानुशासनविवरणम्, स एव हरः = गर्दभः ➔ हरो रासभरुद्रयोः ← [२-४५९] इत्यनेकार्थसङ्ग्रहः, तन्निराकरणे हीरः = सिंहः इव ➔ हीरः सर्पे हरे सिंहे ← [६-१-६९] इति वैजयन्तीकोषः, अरिहरहीरः = शत्रुगर्दभपञ्चाननः, तस्य सम्बोधने अरिहरहीर !, को महामूर्खः अर्हतः शत्रुः भवति, अतो मिथ्याध्वान्ते अटाट्यमानस्य गर्दभोपमा, यथा सर्वेऽपि मृगाः सिंहमालोक्य

*अन्वयः* ☞ हारहूराहारहूरराहो ! [द्राक्षामदिरात्यक्तः !] अरिहरहीर ! [शत्रुगर्दभ - पञ्चानन !] हरह ! [कोपवह्निजलोपम] हरे ! [इन्द्र] हारारिह ! [युत्स्वरिघातक] हर ! [पापहर !] हे अर ! [अरनाथभगवन्] रां [लक्ष्मीं] राहि [प्रयच्छ] हि [पादपूर्त्तौ] ।

नश्यन्ति तथैव तीर्थकृतं दृष्ट्वा मृगवन्मूढाः प्रगाढमोहमयाः कुतीर्थिनोऽपि दूरं यान्ति इति भावः, अथवा आत्मनोऽरिः कामक्रोधादिस्तं निराकृतवानयमित्यपि भावश्च, अथवा रिः = क्षयः → रिशब्दस्तु स्रवे क्षये ← [६७] इत्येकाक्षरनाममालिका विश्वशम्भुप्रणीता, हः = गर्वः अभिमान इत्यर्थः → हः शङ्करे हरौ हंसे रण - रोमाञ्चवाजिषु गर्वे ← [७४-७४] इत्येकाक्षरकाण्डः इरुगपददण्डाधिनाथविरचितः, रः = कामः → रः कामो वह्निः ← [८१] इत्येकाक्षरनाममाला सौभरिरचिता, ही = दुःखम् → ही दुःखे ← [४७] इत्येकाक्षरनाममाला सुधाकलशमुनिकृता, रः = भयम् → भये रश्च प्रकीर्तितः ← [२६] इत्येकाक्षरकोशो महाक्षपणकरचितः, रिश्च हश्च रश्च ही च रश्च इति रिहरहीराः, न विद्यन्ते रिहरहीरा यस्य स अरिहरहीरः = क्षयगर्वकामदुःखभयरहितः कर्मावलिरहितत्वात् तस्य सम्बोधने, अथवा "अरिह ! र ! हीर !" इति श्लेषः कर्तव्यः, अरिह ! ☛ रिः = गतिः → रिर्गतिः ख्याता ← [२७] इत्येकाक्षरकोषः पण्डितमनोहररचितः, हः = क्रोधः → हः शूलिनि करे नीरे क्रोधे ← [४५] इत्येकाक्षरनाममाला सुधाकलशमुनिप्रणीता, रिश्च हश्च इति रिहौ, न रिहौ यस्य स अरिहः = गतिक्रोधविरहितः, मुक्तावात्मनो निश्चलत्वात्, शमशीलत्वात्, तस्य सम्बोधने । रः = ईश्वरः → रश्च प्रकीर्तितः ईश्वरे ← [२६/२७] इत्येकाक्षरकोषो महाक्षपणककृतः, तस्य सम्बोधने । हीर ☛ हीः = शास्त्रं सुखं वा → हीरब्रह्मण्ये शास्त्रे चामन्त्रणेऽपि च सुखे ← [११७] इत्येकाक्षरशब्दमालाऽमात्यमाधवविरचिता, हीम् रातीति हीरः = शास्त्रदाताऽथवा सौख्यदाता, द्वादशाङ्गीप्ररूपकत्वात्, ईप्सितपूरकत्वात् → रांक् दाने ← [१०६९] हीरस्तस्य सम्बोधने ।

पुनः कीदृश ! ? हरह ! ☛ हः = कोपः → हः कोपे ← [३६] इत्येकाक्षरीकोषः, स एव रः = वह्निः → रः पावके च तीक्ष्णे च ← [१] इति विश्वः, तदुपशमने हः = जलम् इव → हः शिवे सलिले ← [३३-१] इति मेदिनी, हरहः तस्य सम्बोधने हे हरह ! = हे कोपवह्निजलोपम ! ।

पुनः कीदृश ! ? हरे ! ☛ हरिः = इन्द्रः कोट्यधिकसुमनोभिरर्च्यत्वात् → इन्द्रो हरिर्दुश्च्यवनः ← [१७१] इति हैमः, अथवा हरिः = सूर्यः ज्ञानालोकेन विश्वविश्वप्रकाशकत्वात् → हरिः शुचीनौ गगनाद् ← [९७] इति हैमः, अथवा हरिः

## હર્ષનિધિ

દ્રાક્ષમાંથી બનેલી મદિરાનો - ઉપલક્ષણથી સર્વવ્યસનનો ત્યાગ કરનારા, રાગાદિશત્રુગર્દભને વિશે સિંહસમાન, કોપ રૂપી અગ્નિનાં ઉપશમન કરવામાં નીર સમાન, હરિ, યુદ્ધમાં જ શત્રુની હિંસા કરનારા, પાપનું હરણ કરનારા હે અરનાથ ભગવાન ! તમે મોક્ષરૂપી લક્ષ્મી આપો.

= केसरी असुमन्नायकत्वात् ➔ सिंहो पञ्चाननो दप्तो मृगेन्द्रः केसरी हरिः ← [१२-१५] इति मदनपालनिघण्टुः, अथवा हरिः = तुरगः लक्ष्यं रंहसा प्रापकत्वात् ➔ वाहो वाजी हयो हरिः ← [१२३३] इति हैमः, अथवा हरिः = चन्द्रः स्वांशुभिः शैत्यप्रतीतिकारकत्वात् ➔ चन्द्रे सूर्ये यमे विष्णौ..... हरिः स्मृतः ← [२७] इत्यनेकार्थनाममाला, अथवा हरिः = मयूरः कोकिलो वा स्वदेशनाकेकारवैराह्ला - दोत्पादकत्वात् ➔ हरिरिन्द्रांशुब्रह्मेन्दुमण्डुकयमबर्हिषु हंसकोकिल ← [पृ.-२६८, पं.-२७/२८] इति शब्दरत्नावली, अथवा हरिः = हंसः वायुर्वा समवसरणमानससरसि राजमानत्वात्, विघ्नवारिददूरीकर्तृत्वात् ➔ हरिः..... वायुः, हंसः ← [भा.-५, पृ.-५०७] इति शब्दकल्पद्रुमः, अथवा हरिः = पण्डितः विद्वत्त्वात् ➔ हरिः पण्डिते ← [पृ.-५४१७] इति वाचस्पत्यम्, सर्वेषां सम्बोधने प्रयोगः ।

पुनः कीदृश ? हारारिह ! ☛ हारः = युद्धम् ➔ हारस्तु मुक्तादामनि संयुगे ← [२-४६१] इत्यनेकार्थसङ्ग्रहः, संयुगं = सङ्ग्रामः युद्धमित्यर्थः, अरिहः = शत्रुघातकः, अरिं हन्ति इति, हारे अरिह इति हारारिहः = युत्स्वरिघातकः, तस्य सम्बोधने हारारिह !, यतोऽयम् युत्स्वेव शत्रुं हिनस्ति राजधर्मत्वाद् अन्यावस्थायां त्वयं करुणाभाववानेव ।

पुनः कीदृश ? हर ! = हरति सर्वेषां देहिनां दुरितानि इति हरः, तस्य सम्बोधने ➔ हृंग् हरणे ← [८८५] 'अच्'प्रत्ययश्च, अथवा हरः = अग्निः ➔ हरो रासभरुद्रयोः वैश्वानरे ← [२-४५९] इत्यनेकार्थसङ्ग्रहः, कर्मतृणदाहकत्वात् तस्य सम्बोधने हर !, अथवा हः = हर्षः ➔ हो हर्षो हिरण्याक्षः ← [९५] इत्येकाक्षरनाममाला सौभरिविरचिता, तं राति = ददाति इति हरः = हर्षदायकः ➔ रांक् दाने ← [१०६९] तस्य सम्बोधने ।

हि पादपूर्तौ ➔ हि हेताववधारणे विशेषे पादपूर्णौ च ← [७-१७] इत्यनेकार्थसङ्ग्रहः ।

इति श्रीअरनाथजिनस्तुतिः ।

★ ★ ★

## श्रीमल्लिनाथजिनस्तुतिः

ममल्लुममलोऽलोलो
लुलोल मलमल्ललूः ।
मल्लो मल्लिर्ललामेलां
लीलमोऽमालमो ललौ ॥ २१ ॥

ममल्लुममल इति ।

मल्लिः = श्रीमल्लिनाथजिनः ममल्लुं ☛ मः = कृतान्तः ➔ मो यमे ← [२५-१] इति मेदिनी, अथवा मः = मदः ➔ म ? (मः)..... मदिरा-मदयोः ← [९२/९३] इत्येकाक्षरशब्दमालाऽमात्यमाधवकृता, मल्लुः = भालुकः ➔ मल्लुः भालुकः ← [भा.-३, पृ.-६४८] इति शब्दकल्पद्रुमः, म एव मल्लुः ममल्लुः कृतान्तवृ - कोऽभिमानभालुको वा तं लुलोल = ममर्द "लुल्" सौत्रोऽयं धातुः इलाम् ☛ इला = वाणी ➔ इलोर्वी वाग् ← [२-४६५] इत्यनेकार्थसङ्ग्रहः, तां ललौ = देशनां ददावित्यर्थः ➔ लांक् आदाने ← [१०६८] "दानेऽपि" इति चान्द्राः ।

कीदृशो मल्लिः ? अमलः ☛ कर्णजं मलं ➔ मलं किट्टम् ← [६३१] इति हैमः, नास्ति मलं यस्य स अमलः = मलरहितः, अथवा मलः = पापम् ➔ मलस्त्वघे ← [२-४९३] इत्यनेकार्थसङ्ग्रहः, नास्ति मलो यस्य स अमलः = निष्पापः, अथवा मः = मानम् ➔ माने च बन्धने मः प्रकीर्तितः ← [२८] इत्येकाक्षरीकोषः, लः = भयं ➔ लो दीप्तो द्यां लश्च भूपे भये ← [३०] इत्येकाक्षरीकोषः, मश्च लश्च इति मलौ, न स्तः मलौ यस्य स अमलः = मानभयरहितः ।

पुनः कीदृशः ? अलोलः ☛ लोलः = चञ्चलः ➔ चटुलं चपलं लोलम् ← [१४५५] इति हैमः, न लोलः अलोलः निश्चल इत्यर्थः, अथवा लोलः = तृष्णावान् न लोलः अलोलः = निरीहः तृष्णाशून्यत्वात् ➔ लोलश्चलसतृष्णयोः ← [२-४९७]

***अन्वयः*** ☛ अमलः [निर्मलः] अलोलः [तृष्णारहितः] मलमल्ललूः [मोह - मल्लोच्छेदकः] मल्लः [योद्धा] ललामा [श्रेष्ठः] लीलमः [धराकाश - चन्द्रः] अमालमः [अदम्भविषः] मल्लिः [श्रीमल्लिनाथस्वामी] ममल्लुं [यमभालुकं] लुलोल [ममर्द] इलां [देशनां] ललौ [ददौ]।

इत्यनेकार्थसङ्ग्रहः [७९८] मङ्खकोशश्च ।

पुनः कीदृशः ? मलमल्ललूः ☛ मलः = पापं ➔ पापे च कृपणे मलः ← [८] इति विश्वः, मल्लः = बलवान् ➔ मल्लः कपाले बलिनि ← [२-४९३] इत्यनेकार्थसङ्ग्रहः, मल एव मल्लः मलमल्लः, अथवा मले = पापे मल्ल इव मलमल्लः = पापमल्लः मोहराज इत्यर्थस्तस्य बलीयस्त्वात्, तं लुनाति = उच्छिनत्ति स मलमल्ललूः = मोहमल्लोच्छेदकः ➔ लूग्श् छेदने ← [१५१९] एतेन मल्लेरर्हतो महामल्लत्वं व्याख्यातं बलीयसो मलमल्लस्य जेतृत्वात् ।

पुनः कीदृशः ? मल्लः = योद्धा ➔ मल्लो योधे ← [४२६४] इति वाङ्मयार्णवः, कर्मरिपोर्योद्धृत्वात् ।

पुनः कीदृशः ? ललामा = श्रेष्ठः नकारान्तोऽयम् ललामा ➔ ललामापि प्रभावे पौरुषे ध्वजे श्रेष्ठे ← [७-५-७२/७३] इति वैजयन्तीकोशः, पुरुषोत्तमत्वात्, अथवा इलाया एव विशेषणम् मनोहरदेशनां ददाविति ।

पुनः कीदृशः ? लीलमः ☛ लीः = पृथ्वी ➔ लिः सर्पो लीर्धरा ← [८४] इत्येकाक्षरनाममाला सौभरिरचिता, लम् = आकाशः ➔ ला च लक्ष्मीः लमम्बरम् ← [१०४] इत्येकाक्षरनाममालिका विश्वशम्भुप्रणीता, मः = चन्द्रः ➔ मः शम्भौ धातरीन्द्रे च चन्द्रे ← [१-६१] इति नानार्थमञ्जरीकोशः, लीः = धरा पृथ्वीत्यर्थः, सा एव लम् = आकाशः इति लीलम् = धराकाशः, तस्मिन् मः = चन्द्रः इव इति लीलमः = धराकाशचन्द्रः उद्योतकारकत्वात् नक्षत्रस्वरूपसर्वजीवानां स्वामित्वाच्च ।

पुनः कीदृशः ? अमालमः ☛ मालम् = दम्भः ➔ मालं तु कपटे ← [२-४९४] इत्यनेकार्थसङ्ग्रहः, मः = विषः ➔ मो यमे समयेऽपि स्याद् विषे च ← [२५-१] इति मेदिनी, मालम् एव म इति मालमः = दम्भविषः, न मालमो यस्य स अमालमो दम्भविषाभाववानित्यर्थः, यतः प्राग्भवे कृतदम्भोऽतः स्त्रीत्वं प्रपेदे, अतोऽस्मिन् भवे निर्दम्भः ज्ञातस्वरूपत्वात्, अथवा मा = व्यथा ➔ मा जलन्धी व्यथा लक्ष्मीः ← [७७] इत्येकाक्षरनाममाला सौभरिकृता, लः = भूः ➔ ल -

# હર્ષનિધિ

નિર્મળ, તૃષ્ણારહિત, મોહમલ્લનો નાશકરનારા, યોદ્ધા, શ્રેષ્ઠ, પૃથ્વી રૂપી આકાશને વિશે ચંદ્રસમાન, કપટસ્વરૂપ વિષ વિનાનાં, શ્રી મલ્લિનાથ ભગવાને યમરૂપી વરુનું મર્દન કર્યું અને દેશના આપી.

क्रिया ककुद्गतो मांसं पिनाकी भूः ← [४६] इत्येकाक्षरीमातृकाकोशः, मः = मदः → म ? (मो)... मदिरामदयोः ← [९२/९३] इत्येकाक्षरशब्दमालाऽमात्यमाधवकृता, मा च लश्च मश्च इति मालमाः, न विद्यन्ते मालमाः यस्य स अमालमः = व्यथाभूमिमदरहितः निश्चिन्तत्वात्, निष्परिग्रहित्वात्, निष्कषायत्वात् ।

श्रीमल्लिनाथस्य स्त्रीत्वेऽपि "मल्लि"शब्दस्य पुंस्त्वमेव कृतं 'लिङ्गनिर्णय' नियमाद् ।

इति श्रीमल्लिनाथजिनस्तुतिः ।



[ ज - न ]

## श्रीमुनिसुव्रतस्वामिस्तुतिः

जाजी जिनजजिन्निजा -
जनिनीर्नाननो जनान् ।
जोऽज्जनोऽजजनन्नृजु -
र्जिनो नो जनजाननः ॥ २२ ॥

# पुण्यवल्लभा

जाजी जिनजजिद् इति ।

अञ्जनः ☛ अञ्जनो वर्णो यस्य स अञ्जनः = श्रीमुनिसुव्रतस्वामीत्यर्थः, अजजनत् = अजायत ➔ जन जनने ← [११०५] इति पाणिनीयधातुपाठः ➔ प्रसूयते प्रसूते च गर्भमोक्षे विजायते प्रजायते जनयति जजन्ति ← [२-४६] इत्याख्यातचन्द्रिका च ।

कीदृशः अञ्जनः ? जाजी ☛ योद्धा शूरवीरो वा ➔ जाजी योधशीले ← [पृ.-३०८४] इति वाचस्पत्यम्, कामक्रोधाद्याभ्यन्तररिपून् प्रति युद्धकारकत्वात् तेषां जेतृत्वाच्च ।

पुनः कीदृशः ? जिनजजिद् ☛ जिनः = कामदेवः सर्वजीवाननादिकालीन संस्कारवशाद् जयति इति जिनः ➔ वीतरागो जिनः प्रोक्तो जिनो नारायणः स्मृतः । कन्दर्पश्च जिनश्चैव ← [६२] इत्यनेकार्थध्वनिमञ्जरीकोषः, जिन एव जः = पिशाचः ➔ जो ना मृत्युञ्जये ताते..... पिशाचे देवरे स्त्रियाम् ← [२१९७] इति वाङ्मयार्णवः, जिनजः = कन्दर्पपिशाचः, यथा पिशाचः सर्वान् ग्रसति तथैवायमपि अत एतयोरुपमोपमेयत्वम्, तं जयति इति क्विप् तकारागमश्च जिनजजित् = कन्दर्प - पिशाचजित् ➔ जिं अभिभवे ← [८] ।

पुनः कीदृशः ? जनान् निजाजनिनीः ☛ जनान् = लोकान् ➔ लोको जनः प्रजा ← [५०१] इति हैमः, निजः = स्वकीयः ➔ निजः पुनः आत्मीयः स्वः

*अन्वयः* ☛ जाजी [शूरवीरः] जिनजजिद् [कन्दर्पपिशाचजित्] जनान् निजाजनिनीः [जनान् प्रव्रज्यामार्गगमयिता] नाननः [सूर्यवदनः] जः [बाह्यरिपुजित्] नृजुः [मनुष्येषु सरलः] नः [नेता] जनजाननः [प्रजासु ज्ञानी] जिनः [तीर्थङ्करः] अञ्जनः [श्रीमुनिसुव्रतस्वामी] अजजनत् [अजायत]।

## હર્ષનિધિ

શૂરવીર, કંદર્પપિશાચને જીતનારા, લોકોને પોતાનાં (ચારિત્રરૂપી) માર્ગ ઉપર લઈ જનારા, સૂર્યસમ તેજસ્વી મુખવાળા, બાહ્ય શત્રુને જીતનારા, મનુષ્યોમાં ઋજુ, ચતુર્વિધસંઘનાં નાયક, મનુષ્યોમાં જ્ઞાની એવા તીર્થંકર શ્રીમુનિસુવ્રતસ્વામી ભગવાનનો જન્મ થયો.

स्वकीयश्च ← [५६१-५६२] इति हैमः, अजनिः = पन्थाः तदुपरि नयति इति निजाजनिनीः = प्रव्रज्यामार्गगमयिता → णींग् प्रापणे ← [८८४]।

पुनः कीदृशः ? नाननः ☛ नः = सूर्यः → तरणौ नः प्रकीर्तितः ← [२२] इत्येकाक्षरीकोषः, आननं = वदनम् → लपनं वदनानने ← [५७२] इति हैमः, न इव आननं यस्य स नाननः = सूर्यवदनः अतिशयतेजस्वित्वात्।

पुनः कीदृशः ? जः = जेता बाह्यरिपुजेतृत्वात् → जेता जश्च प्रकथितः ← [१४] इत्येकाक्षरीकोषः।

पुनः कीदृशः ? नृजुः ☛ नरः = मनुष्याः → मनुष्यो मानुषो मर्त्यो मनुजो मानवो नरः, ना पुमान् ← [१३] इति पञ्चतत्त्वप्रकाशः, ऋजुः = सरलः → ऋजुस्तु प्राञ्जलोऽञ्जसः ← [३७५] इति हैमः, नृषु ऋजुः नृजुः = मनुष्येषु सरलः निर्दम्भत्वात्।

पुनः कीदृशः ? जिनः = तीर्थङ्करः → जिनोऽर्हन्नाप्तसर्वज्ञौ ← [३] इति लघुतमनामकोशः, अथवा जिनः = रागद्वेषमोहजेता → जयति रागद्वेषमोहान् इति जिनः ← [पृ.२९४] इत्यभिधानव्युत्पत्तिप्रक्रियाकोशः।

पुनः कीदृशः ? नः = नेता → नेता नश्च समाख्यातः ← [२२] इत्येकाक्षरीकोषः, चतुर्धासङ्घस्य नायकत्वात्, अथवा नः = पूज्यः → नकारो जिनपूज्ययोः ← [१३] इत्येकाक्षरीनानार्थकाण्डः, सर्वैः पूजितत्वान्न कस्यापि व्यक्तिविशेषस्योल्लेखः, अथवा नः = अस्माकम् जिनः इत्यप्यर्थः कार्यः।

पुनः कीदृशः ? जनजाननः ☛ जनः = प्रजा → जनः प्रजा ← [५०१] इति हैमः, जाननः = ज्ञानी जनेषु जाननः जनजाननः सर्वज्ञत्वात्।

इति श्रीमुनिसुव्रतस्वामिस्तुतिः।

★ ★ ★

[ न - म ]

# श्रीनमिनाथजिनस्तुतिः

मनामि नमिमेमं न -

मनीमानं नमामि नैः ।

नौमीनं माननं निम्न

मममममं मम ॥ २३ ॥

# पुण्यवल्लभा

मनामि नमिम् इति।

नमिम् = श्रीनमिजिनेशं मनामि = पूजयामि → मन पूजायाम् ← [पृ.-८४४] इति शब्दस्तोममहानिधिः, नमामि = वन्दनां करोमि → णमं प्रह्वत्वे ← [३८८], नौमि = स्तवीमि → णुक् स्तुतौ ← [१०८१]।

कीदृशं नमिम् ? नैः एमम् ☛ नः = नेता → नेता नश्च ← [२२] इत्येकाक्षरीकोषः, तैः नैः, एमः = प्राप्यः → एमः प्राप्ये ← [१५३९] इति वाचस्पत्यम्, नैः = नेतृभिः एमः = प्राप्यः स्वीकार्य इत्यर्थस्तम् एमम्।

पुनः कीदृशं ? नम् ☛ नः = जिनः पूज्यो वा → नकारो जिन-पूज्ययोः ← [१३] इत्येकाक्षरीनानार्थकाण्डः, तम्।

पुनः कीदृशम् ? अनीमानम् ☛ नी = रागः → निर्दुर्गतिश्च नी रागः ← [६७] इत्येकाक्षरनाममाला सौभरिरचिता, मा = अभिमानः → मा च लक्ष्मीः प्रकीर्तिता मार्गे माताऽभिमाने च ← [१९/२०] इत्येकाक्षरकोषोऽज्ञातविद्वत्कृतः, नः = ज्ञानम् → नो ज्ञानस्थानयोः ← [२७] इत्येकाक्षरीयप्रथमकाण्डः परमानन्द - नन्दननिर्मितः, न न इति अनः = अज्ञानम्, नी च मा च अनश्च इति नीमानाः = रागाभिमानाज्ञानानि, न नीमाना यस्य स अनीमानः = रागाभिमानाज्ञानरहितः, वीतरागत्वाद्, निष्कषायत्वात्, सर्वज्ञत्वात् तम्।

पुनः कीदृशम् ? माननम् ☛ मः = चन्द्रः → मः शिवश्चन्द्रमाः ← [२७]

**अन्वयः** ☛ नैः एमम् [राजभिः प्राप्यम्] अनीमानं [रागाभिमानाज्ञानरहितम्] माननं [शशिवदनं] निम्नं [गम्भीरम्] अममम् [रोगनाशकम् ] अममम् [निर्ममं] मम इनम् [मम प्रभुं] नं [जिनम्] नमिम् [श्रीनमिनाथजिनं] मनामि [पूजयामि] नमामि [नमस्करोमि] नौमि [स्तवीमि] ।

## હર્ષનિધિ

રાજાઓ વડે પ્રાપ્ય, રાગ અભિમાન અને અજ્ઞાન નથી જેને તેવા, ચંદ્ર જેવા મુખવળા, ગમ્ભીર, રોગનો નાશ કરનાર, મમત્વ વિનાના, મારા પ્રભુ શ્રી નમિનાથ જિનેશ્વરની અર્ચના કરુ છું, વંદના કરુ છું અને સ્તવના કરુ છું.

इत्येकाक्षरीकोषः, आननं = वदनं → लपनं वदनानने ← [५७२] इति हैमः, म इव आननं यस्य स माननः = शशिवदनः सर्वेषां शैत्यप्रतीतिकारकत्वात् आह्लादकत्वाच्च तम् ।

पुनः कीदृशम् ? निम्नम् = गम्भीरं → निम्नं गभीरं गम्भीरम् ← [१०७१] इति हैमः, "सागरवरगम्भीरा" इति वचनात्, अथवा नि निषेधे → नि निश्चये निषेधेऽपीति ← [भा.२, पृ.१३८७] इति शब्दार्थचिन्तामणिः, म्नः = मानः → म्नो मानो म्नाऽमरोत्तरा ← [४५] इति द्व्यक्षरकाण्डः, न विद्यते म्नः = अहङ्कारः यस्य स निम्नः = अहङ्काररहितः कषायशून्यत्वाद्, तम्, अथवा म्नं = मरणम् → म्नं मनो मरणं मधु ← [४५] इति द्व्यक्षरकाण्डः, नास्ति म्नं = मरणं यस्य स निम्नः = मृत्युरहितः सिद्धत्वाद्, तम् ।

पुनः कीदृशम् ? अममम् ☛ अमः = रोगः → अमण् रोगे ← [१७४७] "घञ्"प्रत्यये अमः, "मोऽकमियमि..." ४-३-५५ इत्यनेन उपान्त्याऽकारस्य वृद्धेरभावः, तं मृणाति = हन्ति दूरीकरोतीत्यर्थः → मृ हिंसायाम् ← [१४९२] इति बृहद्धातुकुसुमाकरः, अथवा तं मिनोति = प्रक्षिपति तस्य निरसनं करोतीत्यर्थः → डुमिञ् प्रक्षेपे ← [मकारादिवर्गः - स्वा.१] इति धातुप्रदीपः, "क्वचित्" ५-१-१७१ इत्यनेन "ड"प्रत्ययः, अममः = रोगनाशकः आर्हन्त्यात् तम् ।

पुनः कीदृशम् ? अममम् ☛ मम = ममत्वभावः अव्ययमिदम् → मम ममत्वं ममतेति च ← [पृ.-४७३६] इति वाचस्पत्यम्, न मम यस्य यस्माद् वा स अममः = निर्ममः वीतरागत्वात् तम् ।

पुनः कीदृशम् ? मम इनम् ☛ मम = मदीयः, इनः = प्रभुः → प्रभुः भर्तेश्वरो विभुः ईशितेनः ← [३५९] इति हैमः, मम इनस्तम् ।

इति श्रीनमिनाथजिनस्तुतिः ।



[ ग - न ]

## श्रीनेमिनाथजिनस्तुतिः

गानिन्नगान्नगं ने ! नोऽ -
नग्नो गौगगनागनः ।
नेनोऽनागा नृनागो नो
नाऽनङ्गेनानुगो नगः ।। २४ ।।

# पुण्यवल्लभा

गानिन्नगाद् इति।

अनङ्गेनानुगः ☛ अनङ्गः = कामदेवः अर्थात् प्रद्युम्नः ➔ मदनो जराभीरुरनङ्गमन्मथौ..... प्रद्युम्नः श्रीनन्दनश्च कन्दर्पः पुष्पकेतनः ← [२२७/२२८] इति हैमः, इनः = पिता ➔ इनः पिता ← [२३] इति द्विवर्णरत्नमालिकावृत्तिः, अनङ्गस्य इनः अनङ्गेनः = प्रद्युम्नपिता श्रीकृष्ण इत्यर्थः, अनुगः = अनुगन्ता अनुकूलसेवक इत्यर्थः ➔ अनुगेऽनुपदान्वक्षा ← [१४५७] इति हैमः, अनङ्गेनः अनुगो यस्य स अनङ्गेनानुगः = श्रीकृष्णस्वामी श्रीनेमिनाथजिन इत्यर्थः।

हे गानिन् ने ! = हे स्तुतिकारक नर ! ➔ गानिन् स्तुतियुक्ते ← [पृ.-२५७५] इति वाचस्पत्यम्, निः = नरः ➔ निर्नरि ← [२९] इत्येकाक्षरसंज्ञकाण्डो महीपसचिवरचितः, तस्य सम्बोधने, श्रीनेमिनाथः नगं ☛ नगः = भूधरः पर्वत इत्यर्थः तम् ➔ भूधरधराहार्या नगः ← [१०२७] इति हैमः, अगात् = अगच्छत् ➔ इंण्क् गतौ ← [१०७५] "इणिकोर्गाः" ४-४-२३ इत्यनेन "गा" आदेशः, नो अगात् इति न अर्थाद् गतवानेव इति भावः ➔ अभावे त्व न नो नहि ← [१५३९] इति हैमः, अभावो निषेध इत्यर्थः।

कीदृशः अनङ्गेनानुगः ? अनग्नः ☛ नग्नः = निर्वस्त्रः ➔ नग्नो विवाससि ← [२-२६७] इत्यनेकार्थसङ्ग्रहः, न नग्नः अनग्नः साम्बर इत्यर्थः देवदुष्यसहितत्वात् एतेन न तीर्थकृतो दिगम्बरत्वमपितु सवसनत्वमेवेति व्याख्यातम्।

***अन्वयः*** ☛ हे गानिन् ने [हे स्तुतिकारक नर !] अनग्नः [साम्बरः] गौगगनागनः [पृथ्वीव्योमसूर्यसमूहः] नेनः [नायकेशिता] अनागाः [निष्पापः] नृनागः [पुरुषश्रेष्ठः] नः [पूज्यः] नगः [ज्ञानोत्तमः] अनङ्गेनानुगः [श्रीनेमिनाथजिनः] नगं [गिरिम्] अगात् [अगमद्] नो न।

पुनः कीदृशः ? गौगगनागनः ☛ गौः = भूमिः ➔ गौः प्रभा भूमिर्वाणी ← [२६] इत्येकाक्षरनाममाला सौभरिप्रणीता, भूमिः पृथ्वीत्यर्थः ➔ भूर्भूमिः पृथिवी पृथ्वी ← [९३५] इति हैमः, गगनं = व्योम ➔ व्योमान्तरिक्षं गगनम् ← [१६३] इति हैमः, अगः = सूर्यः ➔ अगः पुंसि भानौ ← [भा.-१, पृ.-११] इति शब्दार्थचिन्तामणिः, नः = वृन्दम् समूह इत्यर्थः ➔ नकारः सुगते वृन्दे ← [२०] इत्येकाक्षरकोशः पण्डितमनोहरविरचितः, गौरेव गगनमिति गौगगनम् = पृथ्वीव्योम, अगानां न इति अगनः = सूर्यसमूहः, गौगगने अगन इव इति गौगगनागनः = पृथ्वीव्योमसूर्यसमूहः, एक एव भानुर्न युगपदेवाखिलपृथ्वीं प्रकाशयितुं समर्थः, तीर्थङ्करस्तु एकस्मिन्नेव क्षणे त्रिलोकं दीपयते, अत एव "समूह"शब्दस्य प्रस्थापना।

पुनः कीदृशः ? नेनः ☛ नः = नेता ➔ नेता नश्च समाख्यातः ← [२२] इत्येकाक्षरीकोषः, इनः = ईशिता स्वामीत्यर्थः ➔ विभुः ईशितेनः ← [३५९] इति हैमः, नानां = नेतॄणाम् इनः = स्वामी इति नेनः = नायकेशिता।

पुनः कीदृशः ? अनागाः ☛ आगः = अपराधः ➔ अपराधस्तु मन्तुर्व्यलीकं विप्रियाऽऽगसी ← [७४४] इति हैमः, नास्ति आगः यस्य यस्माद् वा स अनागाः = अनपराधः, अथवा आ = कोपः ➔ आ निपातः स्मृतो वाक्ये कोपसन्तापयोस्तथा ← [४] इत्येकाक्षरीयप्रथमकाण्डः परमानन्दनन्दनरचितः, गः = प्रीतः अनुराग इत्यर्थः ➔ गः प्रीतः ← [२३] इत्येकाक्षरनाममाला सौभरिप्रणीता, आः = सन्तापः ➔ आः पितामहे सन्तापे च ← [२९] इत्येकाक्षरीनानार्थकाण्डः, आ च गश्च आश्च इति आगाः = कोपप्रीतसन्तापाः, न विद्यन्ते आगा यस्य स अनागाः = कोपप्रीतसन्तापरहितः, मोहनीयकर्माभावात्।

पुनः कीदृशः ? नृनागः = पुरुषश्रेष्ठः उत्तरस्थनागशब्दस्य श्रेष्ठवाचकत्वात् ➔ स्युरुत्तरपदे व्याघ्र-पुङ्गवर्षभकुञ्जराः सिंहशार्दूलनागाद्याः ← [१४४०] इति हैमः।

पुनः कीदृशः ? नः = पूज्यः ➔ नकारो जिन-पूज्ययोः ← [२०-१] इति विश्वलोचनकोशः, सर्वेषां पूज्यत्वात् न व्यक्तिविशेषस्य कस्याप्युल्लेखः, अथवा

## હર્ષનિધિ

હે ગુણગાન કરનાર માનવ ! દેવદુષ્યવાળા, પૃથ્વીરૂપી આકાશને પ્રકાશિત કરવામાં સૂર્યનાં સમૂહ સમાન, નાયકોનાં સ્વામી, અનપરાધી, પુરુષોમાં શ્રેષ્ઠ, પૂજ્ય, જ્ઞાનથી ઉત્તમ શ્રીનેમિનાથભગવાન પર્વત ઉપર (રૈવતગિરિ ઉપર) ગયા.

अवग्रसहितोऽयं प्रयोगः, अनः ☛ नः = इच्छा ➔ नकारं निर्विकल्पम् अत्र स्यादप्रमेयाभमक्षरं वायुवेगं मनोवेगमिच्छारूपम् ← [३५] इत्येकाक्षरनाममाला अज्ञातविद्वत्कृता, नास्ति नो यस्य स अनः = इच्छाशून्यः निरीहत्वात् ।

पुनः कीदृशः ? नगः ☛ नः = ज्ञानम् ➔ नो बुद्धो ज्ञान-बन्धयोः ← [२७] इत्येकाक्षरनाममाला सुधाकलशमुनिनिर्मिता, गः = उत्तमः ➔ गः प्रीतो भवः श्रीपतिरुत्तमः ← [२३] इत्येकाक्षरनाममाला सौभरिरचिता, नेन = ज्ञानेन गः = उत्तम इति नगः = ज्ञानोत्तमः सर्वज्ञत्वात् ।

इति श्रीनेमिनाथजिनस्तुतिः ।



[ ग - र ]

## श्रीपार्श्वनाथजिनस्तुतिः

गुरुसगुरुरागारो
        रगारिगिरिरागुरा ।
गोऽरोगोऽरुरुरङ्गी रां
        रागारुग्रागरिग् ररौ ।। २५ ।।

# पुण्यवल्लभा

गुरुरगुरुरिति ।

उरङ्गी ☛ उरङ्गः = अहिः ➔ उरङ्गः सर्पे ← [पृ.-१३६४] इति वाचस्पत्यम्, स लाञ्छनत्वेन विद्यते यस्य स उरङ्गी = सर्पलाञ्छनः श्रीपार्श्वनाथस्वामीत्यर्थः, "अतोऽनेकस्वरात्" ७-२-६ इत्यनेन "इन्"प्रत्ययः, स राम् ☛ रा = लक्ष्मीः ➔ रा लक्ष्मीः ← [८२] इत्येकाक्षरनाममाला सौभरिकृता, तां ररौ = ददौ ➔ रांक् दाने ← [१०६९] भव्याय इति शेषः ।

ननु कथं भव्याय एव ददौ, अभव्येभ्यः कथं न इति चेत्... उच्यते तेषां तीर्थकृद्धस्तदानानर्हत्वात्, अथवा "उरङ्गीराम्" = उरङ्गी + इराम् इति श्लेषः, इरा = पृथ्वी सरस्वती वा तां ददौ ➔ इराम्भोवाक्सुराभूमिषु ← [२-३८५] इत्यनेकार्थसङ्ग्रहः, राजभ्यः पृथ्वीं, मूकेभ्यश्च सरस्वतीं = वाणीं ददौ ➔ गीर्वाणी भाषा सरस्वती ← [२४१] इति हैमः, अथवा मुग्धजनेभ्यो वाणीं = देशनां दत्तवान् जिन इत्यपि च ।

अथ लक्ष्म्यादिदाने स्याद् रागिनस्तदनुरागाभिवर्धनमिति चेत्..... न आर्हतप्रभावादेतदसम्भवात्, न च लक्ष्मीमात्रमेव किन्तु आगुरा ☛ आगूः = प्रतिज्ञा ➔ आगूः प्रतिज्ञा ← [पृ.१४७] इति हलायुधकोशः, तया सह लक्ष्म्यादिं दत्तवा - नित्याशयः, यतः तद्दानप्रभावाद् अवश्यमेव त्यागभावोत्पत्तिः ।

कीदृश उरङ्गी ? गुरुः ☛ गुरुः = धर्मोपदेशकः ➔ गुरुर्धर्मोपदेशकः ← [७७] इति हैमः, अथवा गुरते = उद्यतते - उद्यमं कुरुते चतुर्विधसङ्घप्रस्थापनाय

***अन्वयः*** ☛ गुरुः [धर्मोपदेशकः] अगुरुः [कर्मभारेण लघुः] आगारोरगारिगिरिः [मानवमयूरमेघः] गः [उत्तमः] अरोगः [निरामयः] अरुः [चरमभवी] रागारुग्रागरिग् [अनुरागमलीमसवर्णदूरीकारकः] उरङ्गी [श्रीपार्श्वनाथः] आगुरा [प्रतिज्ञया सह] रां [लक्ष्मीम्] अथवा इरां [पृथ्वीं सरस्वतीं वा] ररौ [ददौ]।

➔ गुरैति उद्यमे ← [१४६४] ➔ गृणाति धर्मं गुरु ← [७७] इति तत्त्वाभिधायिनी च, अथवा गुरुः = महान् ➔ गुरुर्महति ← [२-४००] इत्यनेकार्थसङ्ग्रहः।

पुनः कीदृशः ? अगुरुः ☛ नास्ति गुरुर्यस्य स अगुरुः स्वयंसंबुद्धत्वात्, अथवा अगुरुः = लघुः ➔ अगुरुस्त्वगुरौ लघौ ← [३-५१३] इत्यनेकार्थसङ्ग्रहः, कर्मभारेण लघुरित्याशयः, अथवा गुः = मदनः कन्दर्प इत्यर्थः ➔ गुः कान्तिर्मदनः ← [२४] इत्येकाक्षरनाममाला सौभरिरचिता, रुः = भयम् ➔ रुः सूर्ये रक्षणेऽपि च भये ← [३७/३८] इत्येकाक्षरनाममाला सुधाकलशमुनिप्रणीता, नास्ति गोः = मदनस्य रुः = भयं यस्य स अगुरुः = कन्दर्पभयरहितः तस्य जेतृत्वात् जितेन्द्रियत्वाच्च।

पुनः कीदृशः ? आगारोरगारिगिरिः ☛ आगारं = गृहम् तद् अस्ति अस्य "अण्" आगारः = गृहस्थः, उरगः = सर्पः ➔ भोगी भुजङ्गभुजगावुरगः ← [१३०३] इति हैमः, अरिः = शत्रुः ➔ अरिर्ना खदिरे शत्रौ ← [३२१] इति वाङ्मयार्णवः, उरगस्य अरिः उरगारिः = बर्हिणः, आगार एव उरगारिः आगारोरगारिः, तत्र तन्मनोमुदि गिरिः = पर्जन्यः इव ➔ गिरिः अहार्यः जीमूतः बलाहकः धरः ← [पृ.-२३, पं.-८] इति लिङ्गानुशासनविवरणम्, आगारोरगारिगिरिः = मानवमयूरमेघः सर्वेषां सौख्यप्रतीतेः कारकत्वात्।

पुनः कीदृशः ? गः = उत्तमः पुरुषोत्तमत्वात् ➔ गः प्रीतो भवः श्रीपतिरुत्तमः ← [२३] इत्येकाक्षरनाममाला सौभरिरचिता, अथवा गः = शुभम् मङ्गलस्वरूपत्वात् ➔ गकारं तु गणेशः स्यात्..... शुभम् ← [१८] इत्येकाक्षरनाममालाऽज्ञातविद्वत्कृता।

पुनः कीदृशः ? अरोगः ☛ रोगः = व्याधिः ➔ रोगो रुजा रुगातङ्को मान्द्यं व्याधिः ← [४६२] इति हैमः, न विद्यते रोगो यस्य स अरोगः = निरामयः तीर्थकृतां सातवेदनीयस्यैवोदयात्, अथवा न स्याद् रोगो यस्माद् स अरोगः = रोगनिवारकः, यतो जिनेश्वरेभ्यो साधिकशतयोजनं यावन्न स्यू रोगादयस्तदतिशयविशेषात् ➔ साग्रेऽपि योजनशते पूर्वोत्पन्ना गदाम्बुदाः, यदञ्जसा विलीयन्ते त्वद्विहारानिलोर्मिभिः ← [३-४] इति वीतरागस्तोत्रवचनात्, अथवा रौः = रोषः रोशब्दस्य प्रथमैकवचने

## હર્ષનિધિ

ધર્મનાં ઉપદેશક, કર્મનાં ભારથી લઘુ, માનવરૂપી મયૂરને વિશે મેઘ સમાન, ઉત્તમ, નિરામય, ચરમભવી, રાગરૂપી મલિન વર્ણને દૂર કરનારા શ્રી પાર્શ્વનાથ ભગવાને પ્રતિજ્ઞાની સાથે લક્ષ્મીનું અથવા પૃથ્વીનું કે સરસ્વતીનું દાન કર્યું.

रुपम् → रो रोषः ← [८३] इत्येकाक्षरनाममाला सौभरिप्रणीता, गः = अग्निः → गश्च गातरि गणेशेऽग्नौ ← [४७] इत्येकाक्षरीनाममाला कालिदासव्यासविरचिता, शैरुरैव ग इति रोगः, नास्ति रोगो यस्य स अरोगः = रोषाग्निरहितः निष्कषायत्वात् ।

पुनः कीदृशः ? अरुः ☛ रुः = युद्धम् → रुर्ना युद्धे ← [६८] इत्येकाक्षरकाण्डो राघवकविविरचितः, न विद्यते रुर्यस्य स अरुः = युद्धरहितः त्यक्तराज्यत्वाद् इति बाह्यदृष्ट्या, आभ्यन्तरदृष्ट्या तु क्रोधादिरिपुजेतृत्वात्, अथवा रु = इच्छा → रु जालेच्छयोः ← [११९] इत्येकाक्षरीनाममाला कालिदासव्यासकृता, नास्ति रु यस्य स अरुः = इच्छारहितः निरीहत्वात्, अथवा रुः = भवः → रुर्ना युद्धे भवे ← [६१] इत्येकाक्षरकाण्ड इरुगपददण्डाधिनाथप्रणीतः, न विद्यते रुर्यस्य स अरुः = अभवः चरमशरीरित्वात् ।

पुनः कीदृशः ? रागारुग्रागरिग् ☛ रागः = आसक्तिः अनुराग इत्यर्थः → रागः..... गान्धारादौ क्लेशादिकेऽनुरागे ← [२-४४/४५] इत्यनेकार्थसङ्ग्रहः, अरुग् ☛ रुग् = शोभा → रुक् शोभाकिरणेच्छासु ← [१-७] इत्यनेकार्थसङ्ग्रहः, नास्ति रुक् यस्य स अरुग् = मलीमसम्, रागः = रङ्गम् वर्ण इत्यर्थः → रागे रङ्गं तु त्रपुणि रागः स्याल्लोहितादिषु ← [२-४४] इत्यनेकार्थसङ्ग्रहः, अरुग् चासौ रागश्च इति अरुग्रागः = मलिनवर्णः, राग एव अरुग्राग इति रागारुग्रागः, तं रिणक्ति = दूरीकरोति शुद्धीकरोति वा यः स रागारुग्रागरिग् = अनुरागमलीमसवर्णदूरीकारकः → रिचूंपी विरेचने ← [१४७४] रागस्योपलक्षणादत्र अन्तरायादि-अष्टादशदोषा - भाववन्तोऽर्हन्तो भवन्ति तदुक्तम् अभिधानचिन्तामणौ → ...रागो द्वेषश्च नो दोषास्तेषामष्टादशाप्यमी ← [७३] इति, स्वस्यैव न किन्त्वपरस्यापि दोषान् दूरीकरोत्ययमित्यपि ध्येयम् ।

इति श्रीपार्श्वनाथजिनस्तुतिः ।



[ व - र ]

## श्रीवीरजिनस्तुतिः

वीरोऽविवरवैरारि -
　　　　रुरुरूरा वरो ररौ ।
राररुरीरो वीरो रं
　　　　वरवेरविरावरः ॥ २६ ॥

# पुण्यवल्लभा

वीरोऽविवर इति।

वीरः = श्रीमहावीरस्वामी रं ☛ रः = धनं → रश्च रामेऽनिले वह्नौ भूमावपि धनेऽपि च ← [२९] इत्येकाक्षरीकोषः, तम् ररौ = ददौ → रांक् दाने ← [१०६९] श्रीवीरो धनस्य दानं कृतवानिति भावः।

कीदृशो वीरः ? वीरः = शूरः → शूरश्चारभटो वीरः ← [३६५] इति हैमः, आभ्यन्तरबाह्यवैरिवारजेतृत्वात्, अथवा वी = विज्ञानं → वी विवादे च विज्ञाने ← [१२८] इत्येकाक्षरीनाममाला कालिदासव्यासकृता, तद् राति = ददाति इति वीरः = विज्ञानदायकः → रांक् दाने ← [१०६९]।

पुनः कीदृशः ? अविवरवैरारिरुः ☛ विवरं = दूषणं → विवरं दूषणे गर्ते ← [२७-२१७] इति मेदिनी, वैरं = विद्वेषः → वैरं विरोधो विद्वेषः ← [७३०] इति हैमः, अरिः = रिपुः → रिपुः शात्रवः प्रत्यवस्थाता प्रत्यनीकोऽभियात्यरी ← [७२८] इति हैमः, रुः = भयम् → रुर्भये च प्रकीर्तितः ← [३०] इत्येकाक्षरीकोषः, विवरश्च वैरञ्च अरिश्च रुश्च इति विवरवैरारिरवः, न विद्यन्ते विवरवैरारिरवो यस्य स अविवरवैरारिरुः = दूषणविरोधरिपुभयरहितः।

अत्रेयं भावना,

श्रीमहावीरः निर्दूषणः सर्वगुणसम्पन्नत्वाद्, सर्वगुणसम्पन्नानां केन सह विद्वेषः ? अत एव अद्वेषी निष्कषायत्वात्, अद्वेषिणश्च किं शत्रुसद्भावः ? नैव अतः

***अन्वयः*** ☛ वीरः [शूरः] अविवरवैरारिरुः [दूषणविरोधरिपुभयाभाववान्] उरूराः [विशालवक्षाः] वरः [उत्तमः] रारुरीरः [कामशत्रुविजेता] वरवेरविरावरः [उत्तमदेहध्वनिरूपवान्] वीरः [श्रीमहावीरस्वामी] रम् [धनं भूमिं वा] ररौ [ददौ]।

अरिपुः सर्वेषां मान्यत्वात्, अशत्रोश्च कस्य भयम् ? न कस्याप्यतो निर्भयः अनन्तवीर्यवत्त्वात् इति क्रमशो भावनीयम् ।

पुनः कीदृशः ? उरूराः ☛ उरु = विशालम् ➔ विशालं तु विशङ्कटं पृथूरु ← [१४२९/१४३०] इति हैमः, उरः = वक्षः ➔ उरो हृदयस्थानं वक्षः ← [६०२] इति हैमः, उरु उरः यस्य स उरूराः = विशालवक्षाः, महापुरुषाणां वक्षसो विशालत्वात्, उत्तमपुरुषाणामेवेदं लक्षणम् ।

पुनः कीदृशः ? वरः = उत्तमः ➔ उत्तमान्यनवरार्ध्यवरे ← [१४३९] इति हैमः, पुरुषोत्तमत्वात्, अथवा वः = संयमः ➔ वः पुमान् सान्त्वने वायौ संयमे ← [७२] इत्येकाक्षरकाण्डः, तं राति इति वरः = संयमदाता ➔ रांक् दाने ← [१०६९] ।

पुनः कीदृशः ? रारुरीरः ☛ रः = कामः ➔ रश्च कामे ← [२६] इत्येकाक्षरकोशो महाक्षपणकविनिर्मितः, अररुः = शत्रुः सकारान्तोऽयम् ➔ अररुः पुंसि अलङ्कारे शत्रौ ← [भा.-१, पृ.-१६४] इति शब्दार्थचिन्तामणिः, र एव अररुः राररुः = कामशत्रुः तम् ईरयति = प्रक्षिपति इति रारुरीरः = कामशत्रुविजेता जितेन्द्रियत्वात् ➔ ईरण् क्षेपे ← [१९७४] ।

पुनः कीदृशः ? वरवेरविरावरः ☛ वरः = श्रेष्ठः ➔ वरो वृतौ विटे जामातरि श्रेष्ठे ← [२-४३९/४४०] इत्यनेकार्थसङ्ग्रहः, वेरम् = देहम् ➔ वेरसंहननदेहसञ्चराः ← [५६३] इति हैमः, विरावः = रवः ध्वनिरित्यर्थः ➔ रवः संराव आरावो विरावः ← [११७] इति पञ्चवर्गपरिहारनाममाला, रः = रूपम् ➔ रश्च कामेऽनले वज्रे शब्दे रूपे च कीर्तितः ← [२९] इत्यभिधानादि-एकाक्षरीनाममाला, वेरञ्च विरावश्च रश्च इति वेरविरावराः = देहध्वनिरूपाणि, वरा वेरविरावरा यस्य स वरवेरविरावरः = उत्तमतनुध्वनिरूपवान्, आद्यसंहननवत्त्वात्, सुमधुरदेशनादायकत्वात्, सुमनसां समूहैरप्यङ्गुष्ठतुल्यरूपं कर्तुमशक्यत्वात्, अथवा वः = प्रबोधः ➔ वः पुमान् स्वान्तगे वाते मरणे संयमेऽधरे प्रबोधे ← [१०३/१०४] इत्येकाक्षरशब्दमालाऽमात्य - माधवप्रणीता, ईः = वाणी ➔ ईर्वारिजदले लक्ष्म्यां वाण्याम् ← [९] इत्येकाक्षरकाण्डो

## હર્ષનિધિ

શૂરવીર, દૂષણ વિરોધ શત્રુ તથા ભય વિનાનાં, વિશાળ છાતીવાળા, ઉત્તમ, કામશત્રુને જીતનારા, ઉત્તમ છે દેહ, ધ્વનિ અને રૂપ જેને એવા શ્રી મહાવીરસ્વામી ભગવાને ધનનું દાન કર્યું.

राघवकविरचितः, रः = रुधिरम् ➔ र - क्रोधिनी च भुजङ्गेशी ज्वाली रुधिर-पावकौ ← [४५] इत्येकाक्षरीमातृकाकोशः, विः = चक्षुः ➔ विश्चक्षुषि ← [६४] इत्येकाक्षरकाण्ड इरुगपददण्डाधिनाथविरचितः, रा = दानम् ➔ रा दाने ← [१०२] इत्येकाक्षरनाममालिका विश्वशम्भुकृता, वः = श्रेयः ➔ वो बुधः श्रेयः ← [२९] इत्येकाक्षरकोषो महाक्षपणकरचितः, श्रेयः = पुण्यम् ➔ श्रेयः..... मङ्गले शुभे धर्मे पुण्ये ← [भा.४, पृ.६३५] इति शब्दार्थचिन्तामणिः, रः = नयः ➔ रशब्दस्तु नये ← [९८] इत्येकाक्षरशब्दमालाऽमात्यमाधवविरचिता, वश्च ईश्च रश्च विश्च रा च वश्च रश्च इति वेरविरावराः = प्रबोधवाणीरुधिरचक्षुर्दानश्रेयोनयाः, वराः = प्रशस्याः पूर्वोक्तेः, वरा वेरविरावरा यस्य स वरवेरविरावरः = श्रेष्ठप्रबोधवाणीरुधिरचक्षुर्दान - श्रेयोनयः विरक्तिकारकत्वात्, पञ्चत्रिंशद्गुणसमेतत्वात्, श्वैत्येनानन्यतमत्वात्, निर्विकारित्वात्, त्यागभावजनकत्वात्, सर्वैश्वर्योपभोक्तृत्वात्, स्याद्वादयुक्तत्वात् ।

इति श्रीमहावीरस्वामिस्तुतिः ।

★★★

[ ज - न ]

## सर्वजिनस्तुतिः

जैनेनानां जनेनानां
नूनं निजननेऽजनि ।
जानां नानेजनानां न
जिनानां जननं ननु ।। २७ ।।

# पुण्यवल्लभा

जैनेनानाम् इति ।

जिनः = अर्हन् ➔ तीर्थङ्करो जगन्नाथो जिनोऽर्हन् भगवान् प्रभुः ← [१-६] इति लघुनाममाला, सर्वेषां जिनानां परिग्रहार्थम् बहुवचनं ज्ञेयम्, जिनाः = सर्वेऽर्हन्तः तेषाम् जननं = जन्म ➔ जन्मजनुषी जननम् ← [१३६७] इति हैमः, निजनने ☛ निः = भूपः राजेत्यर्थः ➔ निर्निरी भूपे ← [२९] इत्येकाक्षरसंज्ञकाण्डः सचिवमहीपविरचितः, जननम् = कुलम् ➔ कुलमन्वयो जननम् ← [५०३] इति हैमः, नीनां = राज्ञाम् जनने = कुले निजनने = राजकुले, न अजनि = न अभवत् इति न, यतो जिनानां जननं राजकुले = उत्तमकुले एव भवति न तु हीनकुले इत्याशयः ➔ जनैचि प्रादुर्भावे ← [१२६५], नूनम् निश्चये ➔ नूनं च निश्चये ← [१५४०] इति हैमः, ननु स्तुतौ ➔ ननु विनिग्रहे... सम्यग्वादे स्तुतौ ← [पृ.-१३३४] इति शब्दार्थचिन्तामणिः ।

कीदृशानां जिनानाम् ? जैनेनानाम् ☛ जैनाः = आर्हताः, जिनः परमदेवता येषां ते जैनाः, इनः = ईश्वरः भगवानित्यर्थः ➔ ईश्वरो विभुः ईशितेनः ← [३५९] इति हैमः, जैनानाम् इन इति जैनेनः तेषाम् ।

पुनः कीदृशानाम् ? जनेनानाम् ☛ जनाः = लोकाः ➔ लोको जनः ← [५०१] इति हैमः, इनः = सूर्यः ➔ हरिः शुचीनौ ← [९७] इति हैमः, जनेषु इनः जनेनः = लोकेषु सूर्यसमानः स्वज्ञानप्रभाभिर्देदीप्यमानत्वाद् अज्ञानतिमिरध्वंसकत्वाच्च तेषाम् ।

*अन्वयः* ☞ जनेनानाम् [लोकेषु सूर्याणाम्] जानां [बाह्याभ्यन्तरारिजिताम्] अनेजनानाम् [निष्प्रकम्पानाम्] जैनेनानाम् [जैनानामीश्वराणाम्] जिनानां [तीर्थकराणाम्] जननं [जन्म] नूनम् [निश्चयेन] नि-जनने [राजकुले] न अजनि [न अभवत्] (इति) न [नहि] ननु [स्तुतौ]।

## હર્ષનિધિ

લોકમાં સૂર્યસમાન, બાહ્ય અને આભ્યંતર શત્રુને જીતનારા, નિષ્પ્રકમ્પ, જૈનોનાં ભગવાન શ્રી તીર્થંકર પરમાત્માનો જન્મ રાજકુળમાં - ઉત્તમ કુળમાં ન થયો હતો એમ નહીં અર્થાત્ રાજકુળમાં જ થયો હતો.

पुनः कीदृशानाम् ? जानाम् ☛ जः = जेता ➔ जेता जश्च प्रकथितः सूरिभिः शब्दशासने ← [१४] इत्येकाक्षरीकोषः, बाह्याभ्यन्तरारिजेतृत्वात् तेषाम् ।

पुनः कीदृशानाम् ? अनेजनानाम् ☛ एजनम् = कम्पनम् पृथ्व्यादेरिति शेषः, अथवा प्रलयः ➔ एजनं वेपथुः कम्पः प्रलयोऽस्पन्दनस्थितिः ← [३-९-८९] इति वैजयन्तीकोषः, नास्ति एजनम् यस्मात् स अनेजनः = अकम्पः तेषाम्, अथवा एजनं = कम्पनम् भीष्मोपसर्गाद् वपुषि जायमानं कम्पनमित्यर्थः, नास्ति एजनं यस्य स अनेजनः = निष्प्रकम्पः तेषाम् ।

इति सर्वजिनस्तुतिः ।

★ ★ ★

[ ग - म ]

## श्री-आगमस्तुतिः

गगं गाममममाग्राम -
मृगगं मागगां मम ।
गोगममामि गीगामा -
गममगागमागमम् ॥ २८ ॥

# पुण्यवल्लभा

गगं गाममिति।

मम = मामकः आगमः = जिनवचननिबद्धशास्त्रम् ➔ आप्तोक्तिः समयागमौ ← [२४२] इति हैमः, तम् आगमम् अमामि = भजामि ➔ अम शब्दभक्त्योः ← [३९१]।

कीदृशमागमम् ? गगम् ☛ गाः = उत्तमाः ➔ गः प्रीतो भवः श्रीपतिरुत्तमः ← [२३] इत्येकाक्षरनाममाला सौभरिकृता, गाः = शब्दाः ➔ गस्तु गातरि गन्धर्वे शब्दसङ्गीतयोरपि ← [२५] इत्येकाक्षरनाममालिका विश्वशम्भुप्रणीता, गाः = उत्तमाः गाः = शब्दाः यस्मिन् स गगः = उत्तमशब्दः तम्, यतो जिनवचसि हीनशब्दानामप्रयोग एव, उत्तमशब्दरत्नैरलङ्कृत इत्याशयः।

पुनः कीदृशम् ? गामम् ☛ गा = अवनिः पृथ्वीत्यर्थः ➔ आबन्तो गाऽवनीवाची ← [२७] इत्येकाक्षरनाममालिका विश्वशम्भुरचिता, मः = सूर्यः ➔ मो वैकुण्ठश्च महाकालस्तन्द्री जठरसंस्थितः, मन्त्रेशो मण्डलो मानी विषः सूर्यो मकारकः ← [४३] इत्येकाक्षरीमातृकाकोशः, गायाम् = अवन्यां मः = सूर्यः इव इति गामः = अवनिसूर्यः अज्ञानान्धकारदूरीकर्तृत्वात् तम्।

पुनः कीदृशम् ? अमाग्राममृगगम् ☛ माः = मार्गाः ➔ मा च लक्ष्मीः प्रकीर्तिता मार्गे माता ← [१९/२०] इत्येकाक्षरकोशोऽज्ञातविद्वत्कृतः, न मा इति अमाः = अमार्गाः कुमार्गा इत्यर्थः, ग्रामः = समुदायः ➔ ग्रामो वृन्दे ← [२-३१४] इत्यनेकार्थसङ्ग्रहः, अमानां = कुमार्गाणां ग्राम इति अमाग्रामः = कुमार्गसमूहः,

*अन्वयः* ☙ गगम् [उत्तमशब्दम्] गामम् [अवनिसूर्यम्] अमाग्राममृगगम् [कुमार्ग - समूहहरिणशार्दूलम्] मागगाम् [अहङ्कारपर्वतदम्भोलिम्] गोगम् [सत्यगाथम्] गीगाम् [सुधावाचम्] अगागमागमम् [असंसारगमना - गमनम्] मम [मामकम्] आगमम् [जिनवचननिबद्धशास्त्रम्] अमामि [भजामि] ।

## હર્ષનિધિ

ઉત્તમ શબ્દોથી યુક્ત, પૃથ્વીમાં અજ્ઞાનરૂપી અંધકારને દૂર કરવામાં સૂર્યસમાન, કુમાર્ગરૂપી હરણોનાં સમૂહને દૂર કરવામાં સિંહસમાન, અભિમાનરૂપી પર્વતનાં ઉચ્છેદન કરવા માટે વજ્રસમાન, સત્ય છે ગાથામાં જેને એવા, અમૃત જેવી વાણીવાળા, સંસારમાં ગમનાગમન ન થાય જેનાં પ્રભાવથી એવા મારા આગમની હું ભક્તિ કરુ છું.

मृगाः = हरिणाः ➔ मृगः कुरङ्गः सारङ्गो वातायुहरिणावपि ← [१२९३] इति हैमः, अमाग्रामा एव मृगा इति अमाग्राममृगा, तद्दूरीकरणे गः = पञ्चाननः इव इति अमाग्राममृगगः = कुमार्गसमूहहरिणशार्दूलः तम् ।

पुनः कीदृशम् ? मागगाम् ☙ मः = मदः अभिमान इत्यर्थः ➔ म ? (मः) स्त्रियां मञ्जुकायां च लक्ष्म्यां माने च मातरि मदिरामदयोः ← [९२-९३] इत्येकाक्षरशब्दमाला माधवविरचिता, अगः = पर्वतः ➔ अगः पर्वते ← [भा.-१, पृ.-११] इति शब्दार्थचिन्तामणिः, म एव अग इति मागः = अहङ्कारपर्वतः, तत्र - तद्भेदने गौः = वज्रम् इव ➔ गौर्विनायके स्वर्गे दिशि पशौ रश्मौ वज्रे ← [६] इत्येकाक्षरनाममालिकाऽमरचन्द्रकविविनिर्मिता, मागगौः = अहङ्कारपर्वतदम्भोलिः तम् ।

पुनः कीदृशम् ? गोगम् ☙ गौः = सत्यम् ➔ गौः .....भूमयूखसुखस्वर्गसत्य ← [१-१४] इत्यनेकार्थतिलकः, गः = गाथा ➔ गश्च गीते च गाथायाम् ← [९] इत्यभिधानादि-एकाक्षरीनाममाला, गौः = सत्यं गे = गाथायां यस्य स गोगस्तम्, असत्यशून्यत्वात् सत्यप्ररुपकत्वाच्च ।

पुनः कीदृशम् ? गीगाम् ☙ गीः = सुधा ➔ गीः सुरा पत्नी सुधा ← [२४] इत्येकाक्षरनाममाला सौभरिप्रणीता, गौः = वाणी ➔ गोः प्रभा भूमिर्वाणी ← [२६] इत्येकाक्षरनाममाला सौभरिकृता, गीः = सुधा इव गौः = वाणी यस्य स गीगौः = सुधावाक् तम् ।

पुनः कीदृशम् ? अगागमागमम् ☙ गा = क्ष्मा पृथ्वीत्यर्थः ➔ गा क्ष्मोमा च रमा ← [२३] इत्येकाक्षरनाममाला सौभरिरचिता, गमागमः = गमनागमनम् ➔ गमनं प्रस्थानं च गतिर्गमः ← [४-२-१०] इति वैजयन्तीकोशः, गायां = पृथिव्यां गमागममिति गागमागमः, न स्याद् गागमागमो यस्मादिति अगागमागमः = असंसारगमनागमनः तम् सन्मार्गोपदेशकत्वात्, पृथ्वीशब्देनात्र संसार एव ध्येयः ।

इति श्री-आगमस्तुतिः ।



[ ग - र ]

## श्रीश्रुतदेवीस्तुतिः

गिरगारं गिरं गोरां
गेङ्गोरगारिगां रर ! ।
गौररागां गोगारीरां
रेङगाङ्गारं गिरे गुरो ! ।। २९ ।।

# पुण्यवल्लभा

गिरगारम् इति ।

रे गोग ! ☞ रे सम्बोधने ➔ सम्बोधनेऽङ्ग भोः प्याट् पाट् हे है हंहो अरेऽयि रे ← [१५३७] इति हैमः, गोगः ☞ गौः = पृथिवी ➔ गौरिति पृथिव्या नामधेयम् ← [२-२, पृ.७५] इति निरुक्तम्, गवि गच्छति = चलति इति गोगः = मनुष्य इत्यर्थः, तस्य सम्बोधने रे गोग = हे मनुष्य ! ➔ गम्लृ गतौ ← [भ्वादिः पृ.-३५२] इति माधवीयाधातुवृत्तिः, नायं सामान्यो मनुष्यः अपि तु दानी च ज्ञानी गायको वा च तदेवाह - किंलक्षण गोग ? रर ☞ रः = धनम् ➔ रश्च रामेऽनिले वह्नौ भूमावपि धनेऽपि च ← [२९] इत्येकाक्षरीकोषः, तं राति = ददाति इति ररः = धनदाता तस्य सम्बोधने रर ! ➔ रांक् दाने ← [१०६९], पुनः कीदृश ? गः = गन्धर्वः ➔ गन्धर्वो गः प्रकीर्तितः ← [९] इत्येकाक्षरीकोषः, गन्धर्वः = गायको ज्ञानी वा, तस्य सम्बोधने ग ! । रे रर ! ग ! गोग ! = हे दातः गन्धर्व मनुष्य ! त्वं गिरे ☞ गीः = वाणी ➔ गीर्वाणी ← [२४१] इति हैमः, तदर्थम् गिरे = वाण्यै उत्तमज्ञानायेत्यर्थः, गिरम् ☞ गीः = सरस्वती ➔ वाग्देवी शारदा ब्राह्मी भारती गीः सरस्वती ← [२] इति शारदीनाममाला, ताम् गिरम्, इङ्ग = गच्छ इत्यर्थः ➔ इगु गतौ ← [८७] तथा च अग गुरो ! ☞ अग प्रियाह्वाने ➔ अग प्रियाह्वाने ← [२४] इति द्विवर्णरत्नमालिकावृत्तिः, गुरुः = धर्मोपदेष्टा ➔ गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके ← [२-४००] इत्यनेकार्थसङ्ग्रहः, तस्य सम्बोधने हे गुरो !, अरं = शीघ्रम् ➔ शीघ्रं

***अन्वयः*** ☙ गिरगारम् [वाग्गृहम्] गोराम् [स्वर्गदाम्] उरगारिगाम् [मयूरगमनाम्] गौररागाम् [शुभ्रवर्णाम्] अरीराम् [अज्ञानशत्रुविच्छेदिकाम्] गिरम् [सरस्वतीम्] गिरे [ज्ञानार्थम्] रे रर ग गोग ! [हे दानिन् गन्धर्व मनुष्य !] इङ्ग [गच्छ] अग गुरो ! [हे प्रिय गुरो !] (त्वमपि) अरम् [शीघ्रम्] अङ्ग [गच्छ] ।

## હર્ષનિધિ

હે દાતા ગંધર્વ મનુષ્ય ! અને હે પ્રિય ગુરુ ! જ્ઞાન માટે વાણીનાં ગૃહસ્વરૂપ, સ્વર્ગને આપનારી, મયૂરથી ગમન કરનારી, ઉજ્જ્વલવર્ણવાળી, અજ્ઞાન શત્રુને દૂર કરનારી એવી સરસ્વતીદેવીનાં શરણમાં જા.

त्वरिं लघु क्लीबेऽरमव्ययम् ← [पृ.३८१-१६] इति कल्पद्रुकोशः, हे गुरो ! त्वमपि गिरे गिरम् अङ्ग = गच्छेत्यर्थः → अगु गतौ ← [८३]।

कीदृशां गिरम् ? गिरगारम् ☛ गिराम् = वाचाम्, अगारम् = निकेतनम् → धामाऽगारं निशान्तं च ← [९९२] इति हैमः, तद् गिरगारम् = वाग्गृहम्।

पुनः कीदृशाम् ? गोराम् ☛ गौः = सुरालयः → गौस्त्रिदिवमूर्ध्वलोकः सुरालयः ← [८७] इति हैमः, तं राति इति गोरा = स्वर्गदा ताम् गोराम्, ज्ञानादपि स्वर्गोपलब्धेः।

पुनः कीदृशाम् ? उरगारिगाम् ☛ उरगः = सर्पः → भुजङ्गभुजगावुरगः ← [१३०३] इति हैमः, अरिः = शत्रुः → अरिर्वैरी जिघांसुश्च रिपोर्नामानि ← [११९२] इति सुशीलनाममाला, उरगस्य अरिः उरगारिः मयूर इत्यर्थः, उरगारिणा गच्छति इति उरगारिगा ताम् उरगारिगाम् मयूरगमनामित्यर्थः, हंसेन मयूरेण वा गमनकर्त्रीत्वात्।

पुनः कीदृशाम् ? गौररागाम् ☛ गौरः = धवलः → गौरशुभ्रवलक्षधवलार्जुनाः ← [१३९३] इति हैमः, रागः = रङ्गम् वर्ण इत्यर्थः → रागे रङ्गं तु त्रपुणि रागः स्याल्लोहितादिषु ← [२-४४] इत्यनेकार्थसङ्ग्रहः, गौरो रागो यस्याः सा गौररागा = धवलवर्णा ताम् → या कुन्देन्दुतुषारहारधवला ← इति वचनात्।

पुनः कीदृशाम् ? अरीराम् = अरिः = शत्रुः पूर्वोक्तः तमीरयति = निरस्यति या सा अरीरा ताम् अरीराम् = शत्रुविच्छेदिकाम् → ईरण् 'क्षेपे ← [१९७४] शत्रुत्वेनात्र अज्ञानमेव भाव्यम्।

इति श्रीश्रुतदेवीस्तुतिः।

★ ★ ★

## पशस्तिः

[ वसंततिलकावृत्तम् ]

इत्थं ह्यनन्तगुणयुक्तजिनेश्वराणां
प्रोक्ता गुणाः समयदेवतयोश्च केचित् ।
वक्तुं जिनाखिलगुणान् खलु कः प्रभूष्णुः ?
दोर्भ्यां तरीतुमखिलो जलधिर्न शक्यः ॥ ३० ॥

स्तुत्वा हृदेच्छति जिनान् कृपयैव तेषां
श्रीराजपुण्यविजयस्य गुरोः सुशिष्यः ।
श्रीराजसुन्दरमुनिस्त्वरयापवर्गं
कल्पद्रुमाच्च तलिनं किल याचते कः ? ॥ ३१ ॥

इति श्रीसौम्यवदनाकाव्यम्

# पुण्यवल्लभा

इत्थं ह्यनन्त इति ।

इत्थम् = एवं प्रकारेण पूर्वोक्तस्तुतिभिरित्यर्थः → इत्थमेवंप्रकारे ← [भा.-१, पृ.-३१६] इति शब्दार्थचिन्तामणिः, अनन्तगुणयुक्तजिनेश्वराणां स्पष्टमेव, समयदेवतयोश्च ← समयः = आगमः → आप्तोक्तिः समयागमौ ← [२४२] इति हैमः, देवता श्रुतदेवतेत्याशयः, समयश्च देवता चेति समयदेवते तयोः समयदेवतयोः, च समुच्चये → चान्वाचये समाहारेऽप्यन्योन्यार्थे समुच्चये ← [२-९] इति विश्वः, केचिद् गुणाः प्रोक्ताः = कथिताः, ननु कथं केचिदेव कथिताः सर्वेषां कथनं कथं न ? इत्याशङ्कायामाह, जिनाखिलगुणान् = तीर्थकृतां सर्वान् गुणान्, वक्तुम् = कथयितुम् → वचंक् भाषणे ← [१०९६] खलु जिज्ञासायां निषेधे वा → खलु स्याद् वाक्यभूषायां जिज्ञासायाञ्च सान्त्वने वीप्सामाननिषेधेषु ← [२-७३] इति मेदिनी, कः प्रभूष्णुः ? = कः क्षमः ? समर्थ इत्यर्थः → सहः क्षमः शक्तः प्रभूष्णुः ← [४९१] इति हैमः, जिनाखिलगुणान् वक्तुं कः समर्थः ? अर्थान्न कोऽपीत्याशयः, हि अवधारणे → हि विशेषेऽवधारणे ← [भा.४, पृ.१०१३] इति शब्दार्थचिन्तामणिः ।

अत्रोपमामाह

जलधिः = समुद्रः → जलधिरर्णवः समुद्रः ← [पृ.-२२, पं.-१] इति लिङ्गानुशासनविवरणम्, कीदृशो जलधिः ? अखिलः = समस्तः → समस्तनिखिला - खिलानि ← [३-१-६५] इत्यमरः, अखिलो जलधिः दोर्भ्याम् = बाहुभ्याम् → बाहु भुजौ न षण् दोः ← [४-४-७१] इति वैजयन्तीकोषः, तरीतुम् न शक्यः = तरणेऽशक्यः → तॄ प्लवनतरणयोः ← [२७], यथा बाहुभ्यां निखिलसमुद्रं तरीतुं न कोऽपि समर्थस्तथैव जिनेश्वराणामखिलगुणान् कथयितुं न कोऽपि समर्थ इत्याशयः ।

*अन्वयः* ☛ इत्थमनन्तगुणयुक्तजिनेश्वराणां समयदेवतयोश्च केचिद् हि गुणाः प्रोक्ताः, जिनाखिलगुणान् वक्तुं खलु कः प्रभूष्णुः ? अखिलो जलधिः दोर्भ्याम् तरीतुं न शक्यः ।

हृदा जिनान् स्तुत्वा तैषां कृपयैव गुरोः श्रीराजपुण्यविजयस्य सुशिष्यः श्रीराजसुन्दरमुनिः त्वरया अपवर्गमिच्छति । कल्पद्रुमाच्च तलिनं किल को याचते ? ।

## હર્ષનિધિ

એ પ્રમાણે અનંતગુણોથી યુક્ત શ્રીતીર્થંકર ભગવાનનાં, આગમનાં તથા શ્રુતદેવતાનાં કેટલાક જ ગુણો કહેવાયા. શ્રીતીર્થંકર ભગવાનનાં સર્વગુણોને કહેવા માટે કોણ સમર્થ છે ? સંપૂર્ણ સમુદ્ર ભુજાદ્વયથી તરી શકાતો નથી.

અંતઃકરણપૂર્વક શ્રીજિનેશ્વર ભગવાનની સ્તુતિ કરીને તેઓની કૃપાથી ગુરુદેવશ્રી રાજપુણ્ય વિ.જી.મ.નાં શિષ્ય મુનિ રાજસુંદરવિજય શીઘ્રતયા મોક્ષને ઇચ્છે છે. કલ્પવૃક્ષ પાસે તુચ્છફળની અથવા તો અલ્પફળની યાચના કોણ કરે ?

जिनवरान् संस्तुत्याथ ग्रन्थकर्ता किमपि वाञ्छति, तदेवाह

जिनान् = तीर्थङ्करान् हृदा = अन्तःकरणपूर्वकं स्तुत्वा = गुणान् प्रगाय तैषां कृपयैव = जिनेश्वराणां करुणयैव → कृपा करुणा दया ← [पृ.-२४२] इति हलायुधकोशः, गुरोः श्रीराजपुण्यविजयस्य सुशिष्यः श्रीराजसुन्दरमुनिः त्वरया = शीघ्रतया - अविलम्बेन अपवर्गम् = मोक्षम् → अपवर्गस्त्यागमोक्षयोः ← [४-४६] इत्यनेकार्थसङ्ग्रहः, इच्छति = वाञ्छति → इषत् इच्छायाम् ← [७८९] तेषां कृपयैव इत्यत्र एवकारेण तत्कृपयैवापवर्गः स्यान्नान्यत्कृपयेति व्याख्यातम् ।

ननु अपवर्गस्यैव कथं वाञ्छा, अन्यत्कस्यापि नेत्याशङ्कोपस्थापयन्नाह, कल्पद्रुमात् = कल्पतरुमासाद्य तस्माद् तलिनं = तुच्छमल्पं वा → तुच्छमल्पं दुभ्राणुतलिनानि च ← [१४२६] इति हैमः, को याचते ? = कस्तुच्छस्याल्पस्य वा याचनां करोति ? किल निश्चितार्थे → किल समभाव्यवार्तानुनयनिश्चितनुष्टिषु ← [पृ.-३०४, पं.-१२] इति शब्दरत्नावली, कल्पपादपमासाद्य सर्वेऽपि जनास्तेभ्य उत्तमं फलमेवापेक्षन्ते न तुच्छमल्पं वा तथैव ग्रन्थकर्तापि जिनस्तुतिकरणानन्तरं तेभ्यः सर्वोत्तममपवर्गमेव फलत्वेनाशास्ते नान्यत्किमपीत्यर्थः ।

इति प्रशस्तिः ।

श्रीसौम्यवदनाश्रीणां मातॄणामृणमुक्तये ।
काव्यस्यास्य कृता तासामभिधाभिधया मया ॥१॥

★

पूज्यानां गुरुवर्याणां जनकानां तपस्विनाम् ।
मुनीनां राजपुण्यानां ममोपकारिणां सदा ॥२॥
श्रीराजवल्लभानां च पूर्वजानां तथा मम ।
संस्मृतावुपकारस्य रचिता पुण्यवल्लभा ॥३॥
सूरीशप्रेरणामृतजनना कल्पवल्लिभा ।
चिरं जयतु स्वोपज्ञा वृत्तिः श्रीपुण्यवल्लभा ॥४॥

इति श्रीपुण्यवल्लभावृत्तिः

ग्रन्थाग्रम् - ११०२

★ ★ ★

उच्यन्ते परिशिष्टेऽत्राद्ये द्व्यक्षरमयानि वै ।
नामानि श्रीजिनादीनां काव्यगतानि मोदतः ॥

| | | |
|---|---|---|
| (१) | श्रीऋषभजिनः | आदिदेवः |
| (२) | श्रीअजितनाथः | करिकाङ्कः |
| (३) | श्रीसम्भवनाथः | सेनासूनुः |
| (४) | श्रीअभिनन्दनस्वामी | कालिकः |
| (५) | श्रीसुमतिनाथः | धाराधरिः |
| (६) | श्रीपद्मप्रभस्वामी | अम्भोजाभः |
| (७) | श्रीसुपार्श्वनाथः | रसासूः |
| (८) | श्रीचन्द्रप्रभस्वामी | शशिभः |
| (९) | श्रीसुविधिनाथः | रामः |
| (१०) | श्रीशीतलनाथः | नन्देननन्दनः |
| (११) | श्रीश्रेयांशनाथः | अशिकाङ्केशः |
| (१२) | श्रीवासुपूज्यस्वामी | लुलायी |
| (१३) | श्रीविमलनाथः | कोलाङ्कः |
| (१४) | श्रीअनन्तनाथः | अनन्तः |
| (१५) | श्रीधर्मनाथः | भिदुभृद् |
| (१६) | श्रीशान्तिनाथः | आचिरः |
| (१७) | श्रीकुन्थुनाथः | अजी |

| | | |
|---|---|---|
| (१८) | श्रीअरनाथः | अरः |
| (१९) | श्रीमल्लिनाथः | मल्लिः |
| (२०) | श्रीमुनिसुव्रतस्वामी | अञ्जनः |
| (२१) | श्रीनमिनाथः | नमिः |
| (२२) | श्रीनेमिनाथः | अनङ्गेनानुगः |
| (२३) | श्रीपार्श्वनाथः | उरङ्गी |
| (२४) | श्रीमहावीरस्वामी | वीरः |
| (२५) | श्रीसर्वे जिनाः | जिनाः |
| (२६) | श्री-आगमः | आगमः |
| (२७) | श्रीश्रुतदेवता | गीः |

★ ★ ★

## परिशिष्ट - २

श्रीसौम्यवदनाकाव्यं चारु प्रदर्श्यते मुदा ।
तीर्थङ्करश्रुतश्रुतदेवतास्तुतिसंयुतम् ॥

कककेकिककं काकौ -
ककं ककककं ककक् ।
ककं कैकं ककं काकं
कुकं कुकुककं ककुक् ॥ १ ॥

कलिकुण्डाधीशं नत्वा
नुत्वा राजेन्द्र-शेखरान् ।
कुर्वे काव्यं जिनस्तुत्य -
हं सौम्यवदनाभिधम् ॥ २ ॥ [युग्मम्]

वादिदेवो विदोऽवेदो
वादिदेवो विदां ददौ ।
दुर्दैवदवदेवो दो
दादं विवाददावदः ॥ ३ ॥

काराकर्ककिरेऽरेकं !
करोक ! कारिकारक ! ।
करिकाङ्काकराकार !
कर्करकर्क ! कं कुरु ॥ ४ ॥

सूनैः सनसि नानाऽसं
सेनासूनुं सनान्ननु ? ।
सेनासूसनिना सानो !
नूनं सा-सानसी सना ॥ ५ ॥

कालिकः कुलिकः काको
लूकिकालूर्लुलोल लः ।
लोककर्लिं कलिः कालं
लालिककेकिकालिकः ॥ ६ ॥

धाराधरी रराधारु -
र्धरोऽधारोऽधुराधरः ।
धीरोऽधाराधरो रोध्रा -
धधुरो रुधिराधरः ॥ ७ ॥

भो जाऽम्भोजाभ ! भुजौजो -
भूभृज्जेऽभोजि भीभज ! ।
भजाम्भोजाभं भाभाभु -
भूर्भो जजाज ! भाजज ! ॥ ८ ॥

रसासूरौरसोस्रै र -
सूरः सुसोर सारसः ।
सूरिरसरसोऽसार
संसारसरसारसः ॥ ९ ॥

शुभ्र ! भोः शशिभेशाऽभीः
शशाशाश ! शशीश ! श ! ।
शौभैः शम्भो ! शुभाशाभोऽ -
भाशुभ ! शुशुभे शिशौ ॥ १० ॥

ररमामुर्मारेरा -
ममममममरामराः ।
मर्मरां मारिमाराम -
मिरं रामं रमारमम् ॥ ११ ॥

दानदानु ददौ नेनो
नन्देननन्दनौदनः ।
निदानुनदनुर्दानी
दुन्दुना नन्दनाननः ॥ १२ ॥

ककोऽकेशोऽशिकाङ्केशोऽ
कोशोऽकाशोऽकृशः कुकः ।
कुशकोशं शशाकाशः
काशकोऽशोककौशिकः ॥ १३ ॥

लालोऽलालो लुलायीलां
लोलां ललौ लयोऽलयः ।
लं लुलोलालीलोऽलोले -
लोऽययीं ययर्यीं ययौ ॥ १४ ॥

कः कोकिलकलो लोकं
कल्कोल्ललाकुलाकलूः ।
कोलाङ्कोऽकालिको लोऽलो
लुलोके कालकालकः ॥ १५ ॥

नेताऽनन्तोऽनन्तानानू -
नूतानुतानूतानिति ।
ततौनन्नूतनो ननू -
न्नतानतोऽतनुतनुः ॥ १६ ॥

भूभृद्भद्राभ ! दाऽदभ्रा -
भद्रदभिद्र ! भेदभिद् !॥
भभ ! भिदुभृदाभाद् भो
भाभिर्द भद्रभूर्ददे ॥ १७ ॥

रुरुचे चारुचीरोऽरु
रचिच्चोरचुराचरः ।
चरुचिराचिरोऽचौर -
चाराररुची रुचा ॥ १८ ॥

राजाजी राजराजं जो
जजारर्जुरजोऽरजाः ।
रज्जुराजिरजीरोऽरं
राजजोऽरीजजोऽजरः ॥ १९ ॥

हारहूराहारहूर -
राहोऽरिहरहीर ! हि ।
हरह ! रां हरे ! राहि
हारारिह ! हरार ! हे ॥ २० ॥

ममल्लुममलोऽलोलो
लुलोल मलमल्ललूः ।
मल्लो मल्लिर्ललामेलां
लीलमोऽमालमो ललौ ॥ २१ ॥

जाजी जिनजजिन्निजा -
जनिनीर्नाननो जनान् ।
जोऽज्जनोऽजजनन्नृजु -
र्जिनो नो जनजाननः ॥ २२ ॥

मनामि नमिमेमं न -
मनीमानं नमामि नैः ।
नौमीनं माननं निम्न
ममममममं मम ॥ २३ ॥

गानिन्नगान्नगं ने ! नोऽ -
नग्नो गौगगनागनः ।
नेनोऽनागा नृनागो नो
नाऽनङ्गेनानुगो नगः ॥ २४ ॥

गुरुरगुरुरागारो
रगारिगिरिरागुरा ।
गोऽरोगोऽरुरुरङ्गी रां
रागारुग्रागरिग् ररौ ॥ २५ ॥

वीरोऽविवरवैरारि -
रुरुरुरा वरो ररौ ।
राररुरीरो वीरो रं
वरवेरविरावरः ॥ २६ ॥

जैनेनानां जनेनानां
नूनं निजननेऽजनि ।
जानां नानेजनानां न
जिनानां जननं ननु ॥ २७ ॥

गगं गाममगाग्राम -
मृगगं मागगां मम ।
गोगममामि गीगामा -
गममगागमागमम् ॥ २८ ॥

गिरगारं गिरं गोरां
गेङ्गोरगारिगां रर ! ।
गौररागां गोगारीरां
रेङगाङ्गारं गिरे गुरो ! ॥ २९ ॥

इत्थं ह्यनन्तगुणयुक्तजिनेश्वराणां
प्रोक्ता गुणाः समयदेवतयोश्च केचित् ।
वक्तुं जिनाखिलगुणान् खलु कः प्रभूष्णुः ?
दोर्भ्यां तरीतुमखिलो जलधिर्न शक्यः ॥ ३० ॥

स्तुत्वा हृदेच्छति जिनान् कृपयैव तेषां
श्रीराजपुण्यविजयस्य गुरोः सुशिष्यः ।
श्रीराजसुन्दरमुनिस्त्वरयापवर्ग
कल्पद्रुमाच्च तलिनं किल याचते कः ? ॥ ३१ ॥

★ ★ ★

दर्श्यतेऽत्र कृता या सा श्रीपुण्यरत्नसूरिभिः ।
विभाति विदुषां कण्ठे द्विवर्णरत्नमालिका ।।

प्रणम्याप्तमहं कुर्वे द्विवर्णरत्नमालिकाम् ।
विदुषां भातु कण्ठे सा चतुराणां चिरं वरा ।। १ ।।
विदम्बुदं ववन्दे वै वादिदेवं वदावद ! ।
विद्वद्वेदविदां वृन्दं दैवदं विविवाददम् ।। २ ।।
क्रूरारीरोऽकरोऽकारि क्रूरैः किं किङ्करैरकम् ।
करिकाङ्कोऽर्करुक्कैः कौ रैरः कं कारकोऽकरोत् ।। ३ ।।
नेनोऽनेनाः सेनानीनां सेनासूनुः सासीनां नः ।
सन्ना नासीन्नानुन्नानां, नानासन्नानासन्नानाम् ।। ४ ।।
कालिकोऽलं किलालोकी, काले लोके कलां ललौ ।
लीलाकल्लोललोऽलोलः कलङ्कालीककल्कलूः ।। ५ ।।
धाराधरिररन्धारं रुरुधेऽरिं धराधरम् ।
रुधिराधिं ररौ धीराऽऽरर्द्धि धरिधुरन्धरः ।। ६ ।।
भभाम्भोजाभ भूभृज्जिज्जजाऽऽजिभाजिभूभुजा ।
भुजजोऽभाजि भूभृज्जिज्जाजीभौजो भुजाजिजित् ।। ७ ।।
रसासूः सरसीं सारां संससार ससारसाम् ।
सुरिरंसुरसंसारी सुसारः ससुरासुरः ।। ८ ।।

भाशाभिः शशिभे शम्भौ शशंसे शुशुभे शिशौ ।
भो भभेश शुभं भाभिः शोभाभिः शं भृशं शुभे ।। ९ ।।
रामामार ररामारमारामेऽमा रमामरैः ।
ममाराररममारामोऽमाम्रै रामो रमेऽमरः ।। १० ।।
ददे नानुदिनं दानं नन्देननन्दनेन नः ।
नानादानं ददाऽदीनाऽऽनन्ददेनाऽऽनन्देन नु ।। ११ ।।
कुशशाङ्कोऽशिकाङ्केशाऽशङ्काशाकुशशोक ! कैः ।
शशङ्के कौशिकः कोः कैः शकोशोऽकांङ्कुशोऽकृशः ।। १२ ।।
येयोऽलोलो लुलायी यां लीलयाऽयी ललौ ययुः ।
ययुया ये ययायाये-यायायो यालयोऽप्यलम् ।। १३ ।।
कुलो लोकेऽकलाकेलिः ककालालिकुलालकः ।
कोलाङ्कः कं किलैकोऽलं लोकालोकी कलोऽकलोत् ।। १४ ।।
तेनेऽनन्तेन नाऽनेनो नन्तानेतृनतेन नः ।
नूनं नानितिनेनेन ततैनोऽतनुनुन्नुतम् ।। १५ ।।
भूभृद्दुन्दुभिभिद्भं भूददम्भीभभीददोः ।
भाभो भिदुभृदाभेदीन्दुभो भूभृददादिभैः ।। १६ ।।
रोऽचर्चीरां चिरं चारुरुचिराचारचञ्चुरः ।
चचारारराचिरोऽचीरोऽरीरोर्चा रुचिरोऽचरः ।। १७ ।।
रैरोऽजीराजराजौ जो रराज राजराजराः ।
राजर्जुरजिरेऽजारोऽरजोजरोऽरिराजिजित् ।। १८ ।।
हरिहाहाहरह्रीरो हारोरा हरिरा हरः ।
हरारहोरहोंऽहोर्ह ! हे हरीरहरेऽर हि ।। १९ ।।

ललाममामला लीला मल्लीमाला ममेऽमलैः ।
मौलौ मल्लेललं मम्लौ माऽलोलेलालिमामलः ॥ २० ॥
जैनेनोऽजनि नेनौजा जननीजननाज्जिनः ।
नाञ्जनो न जनीनो नोऽनिजाजीनजनाजिजीत् ॥ २१ ॥
नमामि नमिनामानममानमनिनं ननु ।
मेनाननं मनोमं नाऽनामं मानममामुनिम् ॥ २२ ॥
नः ! गोगगोगनागेनोऽनिनोऽगान्नाङ्गनानुगा ।
नु नाऽनेनाननोऽनागा नानङ्गेनानुगो नगम् ॥ २३ ॥
गोरो गिरागरो रोगागगौरीगुरुरिङ्गरः ।
ररौ गुरुरुरङ्गीगां रागारीरोग गोगरुग् ॥ २४ ॥
वरो विविवरोऽरोरी वैरिवारेर वीरवाः ।
वारिराराव वीराऽवाऽररोरा रविरेव रः ॥ २५ ॥
साधुस्तोमसुवन्दितान्घ्रिजलज ! ज्ञानव्रताल्पामर !
पूज्य ! श्रीगजसागरेन्द्र ! सुगुरो ! नित्यं प्रसादात्तव ! ।
प्रोक्तेयं सुनुतिद्विवर्णयुगलश्लोकैर्जिनानां मया
प्रातर्ये सुपठन्ति ते परममायन्त्यक्षरं श्रीपदम् ॥ २६ ॥

★ ★ ★

# परिशिष्ट - ४

ग्रन्थानां ग्रन्थकर्तॄणां लोक्यन्ते हर्षतोऽभिधाः ।
अकारादिक्रमादत्र श्रीपुण्यवल्लभागताः ॥

| | | |
|---|---|---|
| (१) | अजिरादि-एकाक्षरनाममाला | अज्ञातकृता |
| (२) | अनेकार्थतिलकः | महीपः |
| (३) | अनेकार्थध्वनिमञ्जरीकोशः | महाक्षपणकः |
| (४) | अनेकार्थनाममाला | धनञ्जयः |
| (५) | अनेकार्थनाममालाभाष्यम् | अमरकीर्तिः |
| (६) | अनेकार्थनिघण्टुः | धनञ्जयः |
| (७) | अनेकार्थसङ्ग्रहः | श्रीहेमचन्द्राचार्यः |
| (८) | अनेकार्थसमुच्चयः [शाश्वतकोशः] | शाश्वतः |
| (९) | अभिधानचिन्तामणिः [हैमकोशः] | श्रीहेमचन्द्राचार्यः |
| (१०) | अभिधानचूडामणिः [राजनिघण्टुः] | नरहरिपण्डितः |
| (११) | अभिधानरत्नमाला [षड्रसनिघण्टुः] | अज्ञातकृता सं. प्रियव्रतशर्मा |
| (१२) | अभिधानरत्नमाला [हलायुधकोशः] | हलायुधभट्टः |
| (१३) | अभिधानराजेन्द्रकोशः | श्रीराजेन्द्रसूरिः |
| (१४) | अभिधानव्युत्पत्तिप्रक्रियाकोशः | श्रीहेमचन्द्राचार्यः |

| | | |
|---|---|---|
| (१५) | अभिधानादि-एकाक्षरनाममाला | अज्ञातकृता |
| (१६) | अलङ्कारचूडामणिः | अजितसेनः |
| (१७) | अल्पपरिचितसैद्धान्तिकशब्दकोशः | श्रीआनन्दसागरसूरिः |
| (१८) | अव्ययकोशः | महादेवः |
| (१९) | आख्यातचन्द्रिका | भट्टमल्लः |
| (२०) | उणादिसूत्रपाठः | श्रीहेमचन्द्राचार्यः |
| (२१) | एकाक्षरकाण्डः | अज्ञातप्रणीतः |
| (२२) | एकाक्षरकाण्डः | इरुगपददण्डाधिनाथः |
| (२३) | एकाक्षरकाण्डः | राघवकविः |
| (२४) | एकाक्षरकोशः | अज्ञातकृतः |
| (२५) | एकाक्षरकोशः | पण्डितमनोहरः |
| (२६) | एकाक्षरकोशः | महाक्षपणकः |
| (२७) | एकाक्षरनाममाला | अज्ञातरचिता |
| (२८) | एकाक्षरनाममाला | श्रीसुधाकलशमुनिः |
| (२९) | एकाक्षरनाममाला | सौभरिः |
| (३०) | एकाक्षरनाममाला | वररुचिः |
| (३१) | एकाक्षरनाममालिका | विश्वशम्भुः |
| (३२) | एकाक्षरनाममालिका | श्रीअमरचन्द्रसूरिः |
| (३३) | एकाक्षरशब्दमाला | अमात्यमाधवः |
| (३४) | एकाक्षरसंज्ञकाण्डः | सचिवमहीपः |
| (३५) | एकाक्षरीकोशः | पुरुषोत्तमदेवः |
| (३६) | एकाक्षरीनानार्थकाण्डः | धरसेनाचार्यः |
| (३७) | एकाक्षरीनाममाला | कालिदासव्यासः |
| (३८) | एकाक्षरीमातृकाकोशः | अज्ञातनिर्मितः |
| (३९) | एकाक्षरीयप्रथमकाण्डः | परमानन्दनन्दनः |

| | | |
|---|---|---|
| (४०) | कल्पद्रुकोशः | केशवः |
| (४१) | कविकल्पद्रुमः | वोपदेवः |
| (४२) | कविकल्पद्रुमः | श्रीहर्षकुशलगणी |
| (४३) | कुमारसम्भवः | कालिदासः |
| (४४) | गणितनाममाला | हरिदत्तः |
| (४५) | तत्त्वाभिधायिनी | श्रीहेमचन्द्राचार्यः |
| (४६) | त्रिकाण्डशेषः | पुरुषोत्तमदेवः |
| (४७) | द्विरूपकोशः | पुरुषोत्तमदेवः |
| (४८) | द्विवर्णरत्नमालिकावृत्तिः | रामर्षिः |
| (४९) | ध्यक्षरकाण्डः | सौभरिः |
| (५०) | धातुपाठः | श्रीहेमचन्द्राचार्यः |
| (५१) | धातुप्रदीपः | नारायणः |
| (५२) | धातुरत्नाकरः | श्रीलावण्यसूरिः |
| (५३) | नत्वादि-एकाक्षरीनाममाला | अज्ञातविरचिता |
| (५४) | नानार्थमञ्जरीकोशः | राघवकविः |
| (५५) | नानार्थरत्नमाला | इरुगपददण्डाधिनाथः |
| (५६) | नानार्थशब्दकोशः [मेदिनीकोशः] | मेदिनीकरः |
| (५७) | नानार्थार्णवसंक्षेपः [राजराजीयकोशः] | केशवस्वामी |
| (५८) | नानार्थोदयसागरः | श्रीघासीलालजी म. |
| (५९) | नाममाला | धनञ्जयः |
| (६०) | नामलिङ्गानुशासनम् [अमरकोशः] | अमरः |
| (६१) | निघण्टुशेषः | श्रीहेमचन्द्राचार्यः |

| | | |
|---|---|---|
| (६२) | निरुक्तम् | यास्कः |
| (६३) | पञ्चतत्वप्रकाशः | वेणीदत्तः |
| (६४) | पञ्चवर्गपरिहारनाममाला [अपवर्गनाममाला] | श्रीजिनभद्रसूरिः |
| (६५) | पाणिनीयधातुपाठः | पाणिनिः |
| (६६) | भक्तामरस्तोत्रम् | श्रीमानतुङ्गसूरिः |
| (६७) | भावप्रकाशः | भावमिश्रः |
| (६८) | मङ्खकोशः | मङ्खः |
| (६९) | मदनपालनिघण्टुः | मदनपालः |
| (७०) | माधवीयाधातुवृत्तिः | सायणाचार्यः |
| (७१) | लक्ष्मीनिवासः [उणादिकोशः] | शिवरामः |
| (७२) | लघुतमनामकोशः | श्रीआनन्दसागरसूरिः |
| (७३) | लघुनाममाला | श्रीहर्षकीर्ति-उपाध्यायः |
| (७४) | लिङ्गनिर्णयः | श्रीकल्याणसागरसूरिः |
| (७५) | लिङ्गविशेषविधिः [वररुचिकोशः] | वररुचिः |
| (७६) | लिङ्गवृत्तिविचारः | वररुचिः |
| (७७) | लिङ्गानुशासनम् | श्रीहेमचन्द्राचार्यः |
| (७८) | लिङ्गानुशासनविवरणम् | श्रीहेमचन्द्राचार्यः |
| (७९) | वाङ्मयार्णवः | रामावतारशर्मा |
| (८०) | वाचस्पत्यम् | तारानाथः |
| (८१) | विश्वप्रकाशः | महेश्वरः |
| (८२) | विश्वलोचनकोशः [मुक्तावलीकोशः] | श्रीधरसेनाचार्यः |

| | | |
|---|---|---|
| (८३) | वीतरागस्तोत्रम् | श्रीहेमचन्द्राचार्यः |
| (८४) | वैजयन्तीकोशः | यादवप्रकाशः |
| (८५) | व्युत्पत्तिरत्नाकरः | श्रीदेवसागरगणी |
| (८६) | शब्दकल्पद्रुमः | राधाकान्तदेवः |
| (८७) | शब्दभेदप्रकाशः [द्विरूपकोशः] | पुरुषोत्तमदेवः |
| (८८) | शब्दरत्नप्रदीपः | अज्ञातकृतः |
| (८९) | शब्दरत्नसमन्वयः | शाहजीमहाराजः |
| (९०) | शब्दरत्नाकरः | श्रीसाधुसुन्दरगणी |
| (९१) | शब्दस्तोममहानिधिः | तारानाथः |
| (९२) | शब्दार्थचिन्तामणिः | सुखानन्दनाथः |
| (९३) | शालिग्रामनिघण्टुभूषणम् | शालिग्रामः |
| (९४) | शारदीनाममाला | श्रीहर्षकीर्तिसूरिः |
| (९५) | शिवकोशः | श्रीघासीलालजी म. |
| (९६) | शेषनाममाला | श्रीहेमचन्द्राचार्यः |
| (९७) | सरस्वतीमणीमाला [वैदिककोशः] | मधुसूदनशर्मा |
| (९८) | सिद्धहैमशब्दानुशासनम् | श्रीहेमचन्द्राचार्यः |
| (९९) | सुशीलनाममाला | श्रीसुशीलसूरिः |
| (१००) | सुशीलनाममाला-एकाक्षरकोशः | श्रीसुशीलसूरिः |
| (१०१) | हारावली | पुरुषोत्तमदेवः |
| (१०२) | हैमशिलोञ्छः [शिलोञ्छनाममाला] | श्रीजिनदेवसूरिः |

★ ★ ★

## परिशिष्ट - ५

रुचिरेकाक्षरीकोशः पुरुषोत्तमनिर्मितः ।
वारं वारं प्रयुक्तोऽतः स एवात्र प्रदर्श्यते ।।

अकारो वासुदेवः स्यादाकारस्तु पितामहः ।
पूजायामपि माङ्गल्य आकारः परिकीर्तितः ।। १ ।।
इकार उच्यते कामो लक्ष्मीरीकार उच्यते ।
उकारः शङ्करः प्रोक्त ऊकारश्चापि लक्षणे ।। २ ।।
रक्षणे चापि ऊकार ऊकारो ब्रह्मणि स्मृतः ।
ऋकारो देवमाता स्याद् ॠकारो दनुजप्रसूः ।। ३ ।।
ऌकारो देवजातीनां माता सद्भिः प्रकीर्तिता ।
ॡकारः स्मर्यते पूर्वैर्जननी शब्दकोविदैः ।। ४ ।।
एकार उच्यते विष्णुरैकारः स्यान्महेश्वरः ।
ओकारस्तु भवेद् ब्रह्मा औकारोऽनन्त उच्यते ।। ५ ।।
अं स्याच्च परमं ब्रह्म अः स्याच्चैव महेश्वरः ।
कः प्रजापतिरुद्दिष्टः कोऽर्कवाय्वनलेषु च ।। ६ ।।
कश्चाऽत्मनि मयूरे च कः प्रकाश उदाहृतः ।
कं शिरो जलमाख्यातं कं सुखं च प्रकीर्तितम् ।। ७ ।।
पृथिव्यां कुः समाख्यातः कुः शब्देऽपि प्रकीर्तितः ।
खमिन्द्रिये खमाकाशे खः स्वर्गेऽपि प्रकीर्तितः ।। ८ ।।

सामान्ये च तथा शून्ये खशब्दः परिकीर्तितः ।
गो गणेशः समुद्दिष्टो गन्धर्वो गः प्रकीर्तितः ॥ ९ ॥
गं गीतं गा च गाथा स्याद् गौश्च धेनुः सरस्वती ।
घा घण्टाऽथ समाख्याता घो घनश्च प्रकीर्तितः ॥ १० ॥
घण्टीशे हनने धर्मे घुर्घोणा घूर्ध्वनावपि ।
ङकारो भैरवः ख्यातो ङकारो विषयस्पृहा ॥ ११ ॥
चश्चन्द्रमाः समाख्यातो भास्करे तस्करे मतः ।
निर्मलं छं समाख्यातं तरले छः प्रकीर्तितः ॥ १२ ॥
छेदके छः समाख्यातो विद्वद्भिः शब्दोकोविदैः ।
जकारो गायने प्रोक्तो जयने जः प्रकीर्तितः ॥ १३ ॥
जेता जश्च प्रकथितः सूरिभिः शब्दशासने ।
रवो झकारः कथितो नष्टे झश्चोच्यते बुधैः ॥ १४ ॥
झकारश्च तथा वायौ नेपथ्ये समुदाहृतः ।
ञकारो गायने प्रोक्तो ञकारो झर्झरध्वनौ ॥ १५ ॥
टो धरित्र्यां च करके टो ध्वनौ च प्रकीर्तितः ।
ठकारो जनतायां स्यात् ठो ध्वनौ च शठेऽपि च ॥ १६ ॥
ठो महेशः समाख्यातः ठश्च शून्ये प्रकीर्तितः ।
बृहद्ध्वनौ च ठः प्रोक्तस्तथा चन्द्रस्य मण्डले ॥ १७ ॥
डकारः शङ्करे त्रासे ध्वनौ भीमे निरुच्यते ।
ढकारः कीर्तिता ढक्का निर्गुणे निर्धने मतः ॥ १८ ॥
णकारः सूकरे ज्ञाने निश्चये निर्णयेऽपि च ।
तकारः कीर्तितश्चौरे क्रोडपुच्छे प्रकीर्तितः ॥ १९ ॥

शिलोच्चये थकारः स्यात् थकारो भ(न)यरक्षणे ।
दकारोऽभ्रे कलत्रे च छेदे दाने च दातरि ।। २० ।।
धं धने सधने धः स्याद् विधातरि मनावपि ।
धिषणा धीः समाख्याता धूश्चैव भार-वित्तयोः ।। २१ ।।
नेता नश्च समाख्यातस्तरणौ नः प्रकीर्तितः ।
नकारः सौगते बुद्धौ स्तुतौ नस्तु प्रकीर्तितः ।। २२ ।।
नशब्दः स्वागते बन्धौ वृक्षे सूर्ये च कीर्तितः ।
पः कुबेरः समाख्यातः पश्चिमे च प्रकीर्तितः ।। २३ ।।
पवने पः समाख्यातः पः स्यात् पाने च पातरि ।
कफे वाते फकारः स्यात् तथाऽऽह्वाने प्रकीर्तितः ।। २४ ।।
फूत्कारेऽपि च फः प्रोक्तस्तथा निष्फलभाषणे ।
बकारो वरुणः प्रोक्तः कलशे बः फलेऽपि च ।। २५ ।।
वक्षःस्थले च बः प्रोक्तो गदायां समुदाहृतः ।
नक्षत्रे भं बुधाः प्राहुर्भवने भः प्रकीर्तितः ।। २६ ।।
दीप्तिर्भा स्याच्च भूर्भूमिर्भीर्भयं कथितं बुधैः ।
मः शिवश्चन्द्रमा वेधा मा लक्ष्मीश्च प्रकीर्तिता ।। २७ ।।
मा च मातरि माने च बन्धने मः प्रकीर्तितः ।
यशो यः कथितः प्राज्ञैर्यो वायुरिति शब्दितः ।। २८ ।।
याने यातरि यस्त्यागे कथितः शब्दवेदिभिः ।
रश्च रामेऽनिले वह्नौ भूमावपि धनेऽपि च ।। २९ ।।
इन्द्रियेन्धनरोधे च रुर्भये च प्रकीर्तितः ।
लो दीप्तौ(प्तो) द्यां लश्च भूपे(मौ) भये चाऽऽह्लादनेऽपि च ।। ३० ।।

लो वाते लवणे च स्याल्लो दाने च प्रकीर्तितः ।
लः श्लेषे चाशये चैव प्रलये साधनेऽपि लः ॥ ३१ ॥
मानसे वरुणे चैव वकारः सान्त्वनेऽपि च ।
विश्च पक्षी निगदितो गगनं परिकीर्तितम् ॥ ३२ ॥
शं सुखं शङ्करः श्रेयः शश्च सीम्नि निगद्यते ।
शयने शः समाख्यातो हिंसायां शो निगद्यते ॥ ३३ ॥
षः कीर्तितो बुधैः श्रेष्ठे षश्च गम्भीरलोचने ।
उपसर्गे परोक्षे च षकारः परिकीर्तितः ॥ ३४ ॥
सः कोपे वर(रु)णे सः स्यात्तथा शूलिनि कीर्तितः ।
सा च लक्ष्मीर्बुधैः प्रोक्ता गौरी सा च स ईश्वरः ॥ ३५ ॥
हः कोपे वारणे हश्च तथा शूली प्रकीर्तितः ।
हिः पद्यावरणे प्रोक्तो हिः स्याद्धेत्ववधारणे ॥ ३६ ॥
क्षः क्षेत्रे वक्षसि प्रोक्तो बुधैः क्षः शब्दशासने ।
क्षिः क्षेत्रे क्षत्ररक्षे च नृसिंहे च प्रकीर्तितः ॥ ३७ ॥
आगमेभ्योऽभिधानेभ्यो धातुभ्यः शब्दशासनात् ।
एवमेकाक्षरं नामाभिधानं क्रियते मया ॥ ३८ ॥

॥ इत्येकाक्षरीकोषः ॥

★ ★ ★

# परिशिष्ट - ६

काव्येऽस्मिन् सानुवादानां ग्रन्थानां दर्शिता नहि ।
सन्दर्भा येषां तेषां हि सूचिरत्र प्रदर्श्यते ॥

| | | |
|---|---|---|
| (१) | अभिनवलघुसंस्कृतकोश | सी. वी. महेता |
| (२) | कालिदासकोश | हीरालाल शुक्ल |
| (३) | पद्मचंद्रकोश [सं. हि.] | गणेशदत्तशास्त्री |
| (४) | पारिजातकोश [सं. हि.] | ईश्वरचंद्र |
| (५) | बृहत्कोश [सं. गु.] | रतिलाल नायक |
| (६) | विनीतकोश [सं. गु.] | गोपालदास पटेल |
| (७) | शब्दचिंतामणि [सं. गु.] | दोलतराम शाह |
| (८) | शब्दचिंतामणि [सं. गु.] | सवाइलाल |
| (९) | शब्दचिंतामणि [सं. हि.] | हंसराज |
| (१०) | शब्दपरिवारकोश | बदरीनाथ कपूर |
| (११) | शब्दमंजरी | विद्यासागर शास्त्री |

| | | |
|---|---|---|
| (१२) | शब्दरत्नमहोदधि [सं. गु.] | मुक्तिविजय |
| (१३) | शब्दरत्नमहोदधि [सं. हि.] | विद्यासागर शास्त्री |
| (१४) | शब्दरत्नाकर [सं. म.] | माधव |
| (१५) | शब्दादर्श [सं. गु.] | गिरजाशंकर शास्त्री |
| (१६) | शब्दार्थचिंतामणी [सं. गु.] | जीवनलाल अमरशी |
| (१७) | शब्दार्थसिंधु [सं. गु.] | एच. जी. मर्चंट |
| (१८) | संस्कृत अंग्रेजी कोश | मोनियर विलियम |
| (१९) | संस्कृत अंग्रेजी कोश | वा. शि. आप्टे |
| (२०) | संस्कृत ईंग्लिश डीक्शनरी | एच. एच. विल्सन |
| (२०) | संस्कृतकोश (नाममाला) | प्र. सरस्वती पु. भंडार |
| (२१) | संस्कृतधातुकोश [सं. गु.] | अमृतलाल सलोत |
| (२२) | संस्कृतधातुकोश [सं. हि.] | प्र. चौखंभा विद्याभवन |
| (२३) | संस्कृतवोर्टेरबुच | ओटो बाटलिंग्श |
| (२४) | संस्कृत-हिंदीकोश | वा. शि. आप्टे |

★ ★ ★

